To

Dr. Lalit Kumar Tripathy ji

Reader,

Rastriya Sanskrit Sansthan, New Delhi.

[illegible signature]

24-06-02.

*Sri Gopal Nyayapanchanan Bhattacharya's*

# ĀCHĀRA NIṚNAYA

# आचारनिर्णयः

with MARGADARSHINI



*Edited with notes & Introduction by*

**Dr. Atul Kumar Nanda**

M.A., Ph.D.D.Litt., B.Ed.

Dept. of Dharmashastra,

Shri Sadashiva Kendriya Sanskrit Vidyapeetha,

Puri, Orissa.

ACHARA NIRNAYA

•

First Edition - 2001

Deepavali



•

Published by :
**Mrs. URMILA NANDA**
C/o. Mrs. Puspalata Garabadu
Ratha Danda, Old Townn,
Bhubaneswar, Orissa

•

Printed by :
Duduly Process & Offset
231, Bapuji Nagar
Bhubaneswar

•

Price : Rs. 200/-



## उत्सर्गः

येषां महानुभावानां विद्वद्वरेण्यानां नितरामतितरां सुतरां
प्रतरामेवाशीर्वादेन स्नेहेन श्रद्धया चोपदेशेन च
ग्रन्थोऽयमाचारनिर्णयः नवात्मप्रकाशनं करोति,
तेभ्यः मम पूज्यश्वशुर-
**श्रीयुक्त-उमाकान्तगर्गवटुमहाभागेभ्यः**
सादरस्मृत्यर्थम्
**"आचारनिर्णयम्"**
सभक्तिकमहं समर्पयामि ।

*अतुलः*

# मङ्गलाचरणम्

चारुस्मेरतराधरेण विलसत् गारुत्मताश्मप्रभा
पारुष्यप्रदकान्तिभक्तजनता सारूप्यसम्पादकम् ।
कारुत्वं कलयत् त्रिलोकघटने तारुण्यधृष्टस्मरं
दारुब्रह्म ममाविरस्तुहृदये कारुण्यवारांनिधिः ॥
नीलाचलनिवासिनं लीलादारवरूपिणम् ।
परंब्रह्मजगन्नाथं प्रणमामि पुनः पुनः ॥
उमां भगवतीं देवीं स्थितिसंहारकारिणीम् ।
ममाभीष्टप्रदां दुर्गां विमलां प्रार्थयाम्यहम् ॥
वासुदेवसुतं कृष्णं रांधामोहनतत्परम् ।
गोपबालाप्रियं देवं गोपालं प्रणमाम्यहम् ॥
यस्य स्मरणमात्रेण ज्ञानसन्मार्गदर्शनम् ।
मम विद्याविकासाय तस्मै श्रीगुरवे नमः ॥

***

# मुखबन्धः

विदितमस्ति तत्र भवतां समेषां वैदिकयुगादनन्तरं स्मृतियुगस्य उद्भवो जातः । यस्य च प्रामाण्यं श्रुत्यनुमापकत्वात् स्मृतेः स्वीक्रियते । अस्य स्मृतियुगस्य अष्टादशशताब्दीं यावत् प्राधान्यमासीत् । यतो हि ख्रीष्टपूर्वस्य षष्ठशताब्दीतः ख्रीष्टीय अष्टादशशताब्दीं यावत् मन्वादिस्मृतीनां गौतमादिधर्मसूत्राणां विश्वरूपादीनां भाष्याणां तथा च माधवाचार्यादीनां निबन्धकाराणां रचना जाता ।

स्मृतीनां सूत्राणां च महत्त्वं तदानीमेव विदुषां पुरतः समायाति यदा तेषां समीक्षणं कृत्वा विद्वद्भिः टीकारूपेण भाष्यरूपेण वा समालोचनं कृतम् । पुनश्च टीकाभाष्याणामपि यदा निबन्धकारः स्वस्य निबन्धग्रन्थे तेषां टीकाभाष्याणां समालोचनं कृत्वा तेषां तेषां मतानां सामञ्जस्यं स्थापयन्ति । तदा निबन्धानां अपि च स्मृतिसूत्रटीकाभाष्याणां महत्त्वं प्रतिपादितं भवति । षष्ठशताब्दीतः सूत्रस्मृतीनां रचना विलुप्ता जाता । तदनन्तरं भाष्यटीकानिबन्धानां रचना प्रारब्धा ।

यदा अस्माभिः वङ्गप्रदेशस्य विषये किमपि आलोचयिष्यामः तदा तेषां संस्कृतिसंस्कारविषये नूनमेव पश्यामः यत् विद्याक्षेत्रे तेषां प्राधान्यं स्वीकार्यम् । यतो हि कौटल्येन प्रतिपादितं यत् चतुर्दश-विद्यासु आन्विक्षिकी विद्या सर्वश्रेष्ठा प्रदीप इव च प्रतिभाति। तन्मते-

प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् ।
आश्रयः सर्वभूतानां साश्वद् आन्विक्षिकी मता ॥

-कौटल्यार्थशास्त्रे (१/३) ।

आन्विक्षिकी विद्या नाम तर्कविद्या अर्थात् न्यायशास्त्रम् । न्यायशास्त्रस्य पट्टभूमिर्भवति वङ्गभूमिः । इयं च वङ्गभूमिः त्रिभिः

शास्त्रैः समलङ्कृता वर्त्तते । यथा न्यायशास्त्रे स्मृतिशास्त्रे भक्तिशास्त्रे च वङ्गदेशस्य सर्वमान्यता भवति । अस्मादेव विज्ञायते वङ्गप्रदेशात् बहुनि धर्मशास्त्राणि बहुनि च न्यायशास्त्राणि, बहुनि च भक्तिशास्त्राणि समुद्गतानि । अद्यापि च शास्त्रत्रयस्य स्मृतिभक्ति-न्यायरूपस्य चर्च्चा वङ्गदेशे बहुप्रचलिता वर्त्तते । अधुनापि प्रोफेसर हेरम्बनारायणभट्टाचार्य, प्रोफेसर अशोकचट्टोपाध्याय, प्रोफेसर जयदेवगङ्गोपाध्यायशास्त्री त्र्यम्बकभट्टाचार्यप्रमुखाः पण्डिताः शास्त्ररचनानुशालीनतत्पराः भूत्वा पण्डितानां अग्रगण्यत्वेन समग्रेभारतवर्षे अपि च समग्रे विश्वे राराजन्ते ।

प्रमुखानां प्राचीनानां वङ्गीयस्मृतिकाराणां विषये मयात्र किञ्चिद् प्रतिपाद्यते ।

**जीमूतवाहनः-**

वङ्गप्रदेशस्य सर्वश्रेष्ठधर्मशास्त्रकारत्वेन जीमूतवाहनः प्रपूजितो भवति । शूलपाणिरघुनन्दनाभ्यां पूर्वं जीमूतवाहनः वङ्गीयर्धशास्त्रस्य व्यवस्थितरूपं सर्जयामास । अस्य जन्म परिभद्रकूले अभूत् । जन्मस्थानं राढा इति वर्त्तते । जीमूतवाहनेन स्वकीये ग्रन्थे मिताक्षरा-गोविन्दराज-धारेश्वरादीनां नामानि उट्टङ्कितानि । जीमूतवाहनस्य धर्मरत्नं त्रिधा विभक्तं दृश्यते । कालविवेकः व्यवहारमातृका-दायभागश्चेति ।

जीमूतवाहनदायभागस्य माहात्म्यं वरीवर्त्तते । मिताक्षरा इव अस्यापि दायभागस्य हिन्दुव्यवहारे महत्त्वं दरीदृश्यते । दायभागस्य मिताक्षरया सह केषुचित् स्थलेषु वैमत्यं परिदृष्टं भवति। अस्य कालस्तु एकादशशताब्दीतः चतुर्दशशताब्दीमध्ये सम्भाव्यते।

**अनिरुद्धः-**

अयं वङ्गप्रदेशस्य राज्ञः राजगुरुरासीत् । स्वकीयप्रतिभाबलेन धर्माध्यक्षपदवीमध्यगच्छत् । दानसागरस्य प्रणयनबेलायां वल्लालसेनेनास्यानिरूद्धस्य सहायता गृहीता ।

अनेनानिरुद्धेन ग्रन्थद्वयं विरचितम् । हारलतायां श्राद्धसम्बन्धे

विचारो दृश्यते । पितृदयिताग्रन्थे सामवेदानुयायिनां जनानामाचरण-विषये च विचारः प्राप्यते ।

**वल्लालसेनः-**

वङ्गप्रदेशस्य राज्ञा वल्लालसेनेन चत्वारः ग्रन्थाः विरचिताः । (१) आचारसागरः (२) प्रतिष्ठासागरः (३) दानसागरः (४) अद्भुतसागरः । दानसागराद् विज्ञायते यद् ग्रन्थोऽयं १०६०-१०६२ संवत्सरे पूर्णो जातः । अतः वल्लालसेन एकादशशतकस्य प्रथमार्द्धे आसीदिति ।

**कुल्लूकभट्टः-**

प्रख्यातमनुस्मृतेः अनेके टीकाकाराः सन्ति । परन्तु सर्वासु टीकासु मन्वर्थमुक्तावली नाम्नी टीका मनोज्ञा लोकप्रियता चास्ति। इयं मन्वर्थमुक्तावली नाम्नी टीका कुल्लूकभट्टेन विरचिता । इमां टीकां विहाय कुल्लूकेन स्मृतिसागर इति ग्रन्थः लिखितः । यत्र अशौचसागरः श्राद्धसागरः इति त्रयो ग्रन्थाः संलग्नाः सन्ति ।

अयं कुल्लूकः वङ्गप्रदेशे नन्दग्रामे जन्मग्रहणमकरोत् । अस्य पितुर्नाम दिवाकरभट्ट इति आसीत् । अयं कुल्लूकः मीमांसा-वेदान्त-न्याय-व्याकरणादिषु ग्रन्थेषु पाण्डित्यं लब्धवान् । अस्याः टीकायाः प्रमाण्यं सर्वैः विपश्चिद्भिः स्वीक्रियते । अयं काश्यामपि शास्त्रविमर्शेण कालं निर्वाहयति स्म । तेन स्वस्य देशस्य विषये स्वकीय मन्वर्थमुक्तावल्यां टीकायां प्रतिपादितं यत्-

गौडे नन्दवासीनाम्नि सुजनैर्वन्द्यैर्वरेन्द्रयां कुले ।<br>
श्रीमद्भट्टदिवाकरस्य तनयः कुल्लूकभट्टोभवत् ॥

इति मनुस्मृतिमन्वर्थमुक्तावलीमङ्गलाचरणे ।

**शूलपाणिः-**

वङ्गप्रान्तस्य त्रिषु प्रधानभूतेषु धर्मशास्त्रकारेषु जीमूतवाहन-रघुनन्दन-शूलपाणिषु शूलपाणिः अन्यतमः । अनेन याज्ञवल्क्य-स्मृतेरुपरि एका टीका दीपकलिकेति लिखिता । अपरे अपि प्रायश्चित्तविवेकः, शुद्धिविवेकः, श्राद्धविवेकः, एकादशीविवेकादयः

ग्रन्था अनेन विरचिताः । अस्य कालः १३५० संवत्सरात् १४५० संवत्सरमध्ये भवेदिति काणेमहोदयानां मतम् ।

**रघुनन्दनः-**

वङ्गप्रान्तस्य धर्मशास्त्रक्षेत्रे अस्य रघुनन्दनस्यागमनं मणिकाञ्चनमिव प्रतिभाति । हिन्दुधर्मस्य रक्षणाय परिपालनाय च ये ये धर्मशास्त्रकाराः प्रयत्नं कृतवन्तः तेषु अयं रघुनन्दनः खलु अविस्मरणीयः ।

अनेन सुविशालः स्मृतितत्त्वग्रन्थः विरचितः । अत्र अष्टाविंशति तत्त्वानि आधारीकृत्य सम्यक् विचारः कृतः । स्मृतितत्त्वं विहाय गयाश्राद्धपद्धतिः, दायभागभाष्यम्, तीर्थतत्त्वम्, रासयात्रापद्धतिः, त्रिपुष्करशान्त्यादिग्रन्थानामपि प्रणयनं रघुनन्दनेन कृतम् । अयं पञ्चदशशताब्द्या अन्तिमभागतः षोडशशताब्द्याः तृतीयचरणं यावत् आसीदिति विपश्चितां निर्णयः ।

एतान् धर्मशास्त्रकारान् विहाय अन्येऽपि महान्तविद्वांसः सन्ति येषां कृतयः स्मृतयश्च संसारवासिनां जनानां नित्यनैमित्तिकजीवने आचार-व्यवहार-प्रायश्चित्तादिरूपे सर्वत्रैव आवश्यकाः भवन्ति । विशालभूतस्य भारतवर्षस्य सुसंस्कृतिः पृथिव्याः सर्वश्रेष्ठस्थानं भजतेतराम् । परन्तु भारतदेशस्य विशेषतः वङ्गदेशस्य विदुषः भारतीयसंस्कृतेः उन्नायकाः पथप्रदर्शकाः भवन्तीति नास्ति काचित् विप्रत्तिपत्तिः ।

**वङ्गीयस्मृतिनिबन्धृषु**

**महामहोपाध्यायः श्रीगोपालन्यायपञ्चाननभट्टाचार्यः-**

धर्मशास्त्रनिबन्धसागरे ये ये निबन्धकाराः अस्माभिः परिलक्ष्यन्ते तेषु आचारविषयकनिबन्धारोऽपि अनेके सन्ति । तेषु बहवोऽपि मिथिलावास्तव्याः अन्ये केचन वङ्गीयाः सन्ति । वङ्गीयनिबन्धसाहित्याकाशे श्रीमतः गोपालन्यायपञ्चाननभट्टाचार्यस्य महद्वैशिष्टयमस्तीति नास्ति काचिदपि विप्रतिपत्तिः । आचार-निर्णयाख्यास्य महतो निबन्धरत्नस्य कर्त्ता भवति अयं महानुभवः । अयं महाशयः नदीयामण्डलस्य नवद्वीपनामकस्थाने एकस्मिन्

ब्राह्मणपरिवारे जन्म लेभे । सोऽपि वैष्णवः आसीत् । दुर्भाग्यवशात् तस्य परिवारस्य इतिवृत्तिविषये किमपि तत्त्वं कुत्रापि नोपलभ्यते । ऐतिहासिकाः अपि तस्मिन् विषये मौनमवलम्बन्ते । अतः तद्विषये अपि अस्माभिः नाधिकं वक्तुं शक्यते । परन्तु तस्य प्रकृतं नाम रामगोपालभट्टाचार्यः आसीदिति सुबोधचन्द्रसेनगुप्तविरचित संसद् वाङ्गालिचरिताभिधाननामक वङ्गीयपुस्तकात् उपलभ्यते । तस्य न केवलं धर्मशास्त्रविषयस्योपरि विद्वत्ता, अपि तु न्यायशास्त्रे तस्य प्रगाढपाण्डित्यमासीदिति अनुमीयते । अतः न्यायपञ्चाननः इति उपाधिना विभूषितोऽभवत् । एवंभूतविद्वत्तायां सुप्रसन्नः सन् नवद्वीपस्य राजा श्रीकृष्णचन्द्रमहोदयेन तस्य राजसभायां राजपण्डितरूपेण नियुक्तः इति सुरेशचन्द्रवानार्जीमहोदयेन लिखितमस्ति "स्मृतिशास्त्रेः वाङ्गालि" नामकात् वङ्गीयपुस्तकात् पठ्यते । आंग्लसर्वकारात् वृत्तिं लब्ध्वा अयं व्यवस्थापकपद-मलङ्कृतवान् । एच्.वी.शास्त्रीमहोदयप्रणीत 'न्यु इण्डिया अन् डिक्सनारी'नामकपुस्तकात् एतदवगम्यते यत् वारेन् हेष्टिंगस्महोदयेन विधिविषयकं ग्रन्थं लिखितुमिच्छता महोदयेन एकादशपण्डित-प्रवराणां परामर्शेन विधिविषयकः ग्रन्थोपस्थापितः । तेषु पण्डितप्रवरेषु गोपालन्यायपञ्चाननः अन्यतमः आसीत् । यस्य महत्ता प्रयासेन ग्रन्थोऽयं विरचितः, अयञ्च भाषान्तरेण अनुदितः सन् अधुनापि युरोपमहादेशे आइनग्रन्थरूपेण सर्वजनादृतः प्रशंसितश्च भवति ।

विवादार्णवसेतोः प्रणेता गोपालः एवं गोपालन्यायपञ्चाननः एतयोर्मध्ये प्रभेदः नास्तीति 'स्मृतिशास्त्रेर वाङ्गालीति' ग्रन्थस्य पर्यालोचनया एतदभ्यनुज्ञायते । हरप्रसादशास्त्रीमहोदयस्य मतानुसारमपि गोपाल-गोपालन्यायपञ्चाननयोर्मध्ये नास्ति कश्चन भेदः । अतः विवादार्णवसेत्वाख्यस्य ग्रन्थस्य कर्त्ता योऽयं गोपालः स एव महामहोपाध्यायगोपालन्यायपञ्चाननभट्टाचार्यः इति ।

विद्वदग्रगण्यपण्डितप्रवरस्य गोपालन्यायपञ्चाननभट्टाचार्यस्य एका किम्बदन्ती अस्ति । राजवल्लभनामधेयः कश्चन राजा ढाकादेशे

आसीत् । तस्यापि काचन कन्या अष्टवर्षीया विधवा आसीत् । अतः तस्याः पुनर्विवाहाय कर्त्तुमभिलषितः राजा विभिन्नान् देशान् प्रति पण्डितान् प्रेषयित्वा तस्य इच्छां विज्ञापितवान् । तदानीन्तन समये राजा कृष्णचन्द्रदेवः वङ्गप्रदेशस्य शासकः आसीत् । विधवा-विवाहविषयमधिकृत्य सोऽपि स्वराज्यपण्डितसभायां विचारयितु-मागतैः पण्डितैः सह शास्त्रार्थं कर्त्तुमादिदेश । येन महान् विवादः विसंवादश्च समजनि । धर्माशस्त्रविरुद्धत्वादित्थं विधवाविवाहपद्धतिः न गृहीता । तदर्थं चानेन गोपालन्यायपञ्चाननभट्टाचार्येण महान् प्रयासः कृतः । परन्तु विधवाविवाह निन्दाकरः धर्मविरुद्धश्चेति हेतोः तत् सपक्षे युक्तिं दातुं स नैच्छत् । परन्तु तत् परवर्त्तिकाले अन्यतम वङ्गराज्यपालेन दलहोजि इत्याख्येन महोदयेन ऊनविंशतिशतकस्य उत्तरार्धे विधवाविवाहः प्रचलितः । अतः ततः पूर्वं सुतरामेव सा प्रथा निषिद्धा आसीदिति इतिहासतः समुपलभ्यते ।

**ग्रन्थकर्त्तुः कालनिरूपणम्-**

अष्टादशशतके श्रीकृष्णचन्द्रमहोदयस्य राजसभां महामहोपाध्यायः गोपालन्यायपञ्चाननः मण्डितवान् इति सुरेशचन्द्र-वानार्जीकृत 'स्मृतिशास्त्रेर वाङ्गाली' पुस्तकात् प्राप्यते । अपि च अपरमेकं प्रमाणमस्ति यदयमष्टादशशताब्दीयः । सुबोधचन्द्रसेनगुप्त-विरचिते संसदवाङ्गालीचरिताभिधानेऽपि अष्टादशखीष्टाब्दे अयं गोपालन्यायपञ्चाननः महाराचकृष्णचन्द्रदेवस्य राजसभायामन्यतमः सभापण्डितः आसीदिति वर्णनमस्ति । अतः अनेन समाधीयते यदयमष्टादशशताब्दीयो भवितुमर्हति ।

पूर्वोक्तकिम्बदन्त्यनुसारं राजा राजवल्लभेन विधवाविवाह-प्रथायाः प्रचलनार्थं यद्विविभिन्नेषु राज्येषु पण्डितसम्प्रेषणं कृत्वाऽनेन शास्त्रर्थः कृतः, तस्मिन् शास्त्रार्थे च गोपालन्यायपञ्चाननः अंशमग्रहीत इति एतत् सर्वं कालिकिङ्करमहोदयेन 'सर्वे आफ् इण्डियाज् सोसियल् एण्ड इकोनोमिकाल कण्डिसन्' नामकग्रन्थे प्रतिपादितम् । एतस्मात् प्रतीयते यत् एतत् १७०७-१८१३

ख्रीष्टीयशतकमध्यवर्त्तीकाले सर्वाः घटनाः वर्णिताः । अपि च स्वलिखिततिथिनिर्णयाख्यग्रन्थस्य पुष्पिकायां एवमेवास्ति यत्- इति श्रीगोपालन्यायपञ्चाननभट्टाचार्यविरचिततिथिनिर्णयः समाप्तः शाके १७२२ संवत्सरे चैत्रशुक्लचतुर्दश्यामिति । अस्मात् स्पष्टं भवति यत् सः अष्टादशशतके अनेकाः कृतीः विरचितवान् ।

१७७२ ख्रीष्टाब्दे यदा वारेन् हेष्टिंगस् पश्चिमवङ्गे नूतनराज्यपालरूपेण नियुक्तः तदानीं तेन वारेन् हेष्टिंगस्महोदयेन विवादार्णवसेतुनामधेयाख्यं ग्रन्थं विरचयितुं एकादशविद्वद्वरेण्याः पण्डिताः नियुक्ताः । तेषु विद्वद्ग्रगण्येषु गोपालन्यापञ्चाननः अन्यतमः आसीदिति हरप्रसादशास्त्रीमहोदयानां 'न्यु इण्डियान् आण्डिकुइटी' पुस्तकादुपलभ्यते । अतः एतस्मादवगम्यते यत् स एव गोपालन्यायपञ्चाननः १७७२ शतके आसीत् ।

नगेन्द्रनाथवसुकृतविश्वकोषादपि एतज्ज्ञायते यत् रघुनन्दनस्य सर्वाणि स्मृतितत्त्वानि अनेन समालोचितानि । पुनश्च अष्टादश-शतकस्य प्रथमद्वितीयदशके वा अयं गोपालन्यायपञ्चानन जातः अभूदिति विश्वकोषकारस्याभिमतम् । अतः एतद्वक्तुं शक्यते यदष्टादशशतकस्य प्रथमदशकादारभ्य नवमदशकमध्ये महामहोपाध्याय गोपालन्यायपञ्चाननभट्टाचार्यस्य समय भवितुमर्हतीति ।

गोपालन्यायपञ्चाननः भारतस्य पश्चिमवङ्गान्तर्गतनदीया-मण्डलस्य नवद्वीपनामके स्थाने लब्धजन्माभूत्। अपि च नामान्तपदवी वर्त्तते भट्टाचार्य इति भट्टाचार्यसंज्ञा केवलं वङ्गीयानां भवतीति नास्ति कश्चन विसवादः नान्यत्र भारतवर्षस्य प्रदेशेषु भट्टाचार्यसंज्ञाऽस्माभिः प्राप्यते । यद्यपि कुत्रचित् मिलति तर्हि तस्य मूलं वङ्गप्रदेश एव । अयं भट्टाचार्यसंज्ञत्वात् ब्राह्मण इति निश्चप्रचं वक्तुं शक्यते ।

**ग्रन्थकृत् कृतयः-**

विद्वच्छिरोमणिः महानुभवोऽयं समग्रधर्मशास्त्रीयग्रन्थानधीत्य सारं च निगृह्य अनेकान् ग्रन्थान् विरचितवान् । सर्वे ग्रन्थाः निर्णयाख्याः भवन्ति । यथा अशौचनिर्णय-आचारनिर्णय-तिथिनिर्णय-

दायनिर्णय-प्रायश्चित्तनिर्णयश्चेति । एतान् ग्रन्थान् विहाय अन्येऽपि निर्णयाख्याः ग्रन्थाः सन्तीति सुरेशचन्द्रवानार्जीमहोदयेन प्रतिपादितम्। तेषु यथा कालनिर्णय-कोष्ठीनिर्णय-दुर्गोत्सनिर्णय-शुद्धिनिर्णय-विवादनिर्णय-विवाहनिर्णय-श्राद्धनिर्णय-मलमासनिर्णय-संक्रान्तिनिर्णय-सम्बन्धनिर्णय इति एते ग्रन्थाः दृष्टिगोचराः भवन्ति। हरप्रसादशास्त्रिमहोदयानां लेखनानुसारं तस्य कृतिषु व्यवस्थानिर्णय-व्रतोत्सवकृत्यम्-यागविचार-अधिकारनिर्णय-प्रायश्चित्तनिर्णयादय अन्तर्भुक्ता भवन्ति । मिथिलास्थ विस्तृतविवरणात्मकमातृकासूचीतः 'मानुस्क्रिप्टस् कैटलाग् आफ् मिथिला' पुस्तकादेतदपि ज्ञायते यत् गोपालन्यायपञ्चाननभट्टाचार्येण बहवः ग्रन्थाः विरचिताः । रघुनन्दनस्य प्रभावः अस्योपरि पतितः इति निश्चीयते । यतः तेन प्रायशः रघुनन्दनं स्मार्त्तभट्टाचार्यरूपेण विलिखितम् । स वैष्णवः आसीदिति स्वलिखितपुष्पिकातः अनुमीयते, यतः स सर्वत्र श्रीकृष्णं नमस्कृत्य मङ्गलमाचरति । यथा दायनिर्णयस्य प्रारम्भे-

श्रीकृष्णचरणं ध्यात्वा नत्वा गोपालशर्मणा ।
वितन्वते विवादेषु दायभागस्य निर्णयः ॥

इति लिखितम् । दायभागनिर्णयाख्यः निबन्धोऽयं प्राचीनार्वाचीन-निर्विशेषेण विख्यातः नानादेशीयप्रामाणिकैश्च समादृतो भवति ।

पुनश्च विचारनिर्णयग्रन्थारम्भे श्रीकृष्णं नमस्कृत्य मङ्गलमाचरति । तद्यथा-

श्रीकृष्णचरणाम्बुजमकरन्दमधुव्रतः ।
न्यायपञ्चाननश्चात्र विचारनिर्णयं सुधीः ॥

इत्यस्मात् ज्ञायते यदनेन विचारनिर्णयोऽपि लिखितः । सम्प्रति अपि सर्वत्रास्य निबन्धस्य उपादेयत्वं महत्त्वं चास्तीति नान्यत्र कापि विचिकित्सेति दिक् । अनेन क्रमानुसारं विचारनिर्णय-दायभागनिर्णय-तिथिनिर्णय-सम्बन्धनिर्णय-अशौचनिर्णय-कालनिर्णय-प्रायश्चित्तनिर्णय-कोष्ठीनिर्णय-दुर्गोत्सवनिर्णय-विवादनिर्णय-व्रतोत्सवनिर्णय-शुद्धिनिर्णय-श्राद्धनिर्णय-मलमासशौचनिर्णय-

संक्रान्तिनिर्णय-विवादार्णवसेतु-व्रतोत्सवकृत्यम्-व्यवस्थानिर्णय-यागविचारनिर्णय-अधिकारिनिर्णय तथा मलमासनिर्णयाख्याः ग्रन्थाः लिखिताः। श्रीगोपालन्यायपञ्चाननभट्टेन ये ये निर्णयग्रन्थाः विरचिताः तान् सर्वान्नपि ग्रन्थान् समालोचकाः पण्डिताः प्रशंसन्ति।

**तुलनात्मकदृष्ट्या ग्रन्थस्यास्य समीक्षणम्-**

आचारनिर्णयस्य रत्नमयस्य धर्मशास्त्रस्यास्य रचयिता तत्र भवान् श्रीगोपालन्यायपञ्चाननभट्टाचार्यः यथा भगवान् गोपालः सत्येऽपि ज्ञान अमृतस्य नवनीतस्य ग्रहणे, भक्षणे दाने च रुचिं चक्रे तथैव अयं वङ्गीयब्राह्मणः बाह्याभ्यन्तराशौचयुक्तः सन् आचारनिर्णयाख्यं निबन्धं विरचयामास, यत्र प्रबन्धे बहूनां वैदिकमन्त्राणां बहूनां च धर्मशास्त्रपुराणवचनानां स्थानोपयोगि प्रामाण्यं ग्रन्थेऽस्मिन् दृढीकरणाय उपनिबद्धितवान् सः।

अयं यः आचारनिर्णयः ग्रन्थः धर्मशास्त्रे नैव प्राचीनः नापि अर्वाचीनः। यतो हि आचारनिर्णयस्य प्राक् बहूनां आचारसम्बन्धिनां ग्रन्थानां विरचनं जातम्। यद्यपि मन्वादिषु स्मृतिषु आचारविषयकमालोचनं लभ्यते, यद्यपि गौतमादिषु धर्मसूत्रेषु आचारविषयकमालोचनं दृश्यते, तथापि निबन्धग्रन्थस्य प्राधान्यं महत्त्वं च आचारविषये नितरां वरीवर्त्तते। यतो हि एकमेव विषयं गृहीत्वा निबन्धारः बहुनिबन्धान् विरचयन्ति। तत्र तत्र निबन्धे त एव बहूनां प्रमाणवाक्यानां स्मृतिश्रुतिपुराणानामाकलनं कृत्वा स्वकीयस्य प्रबन्धस्य पुष्टिं साधयन्ति। अतः आधुनिके युगेऽस्मिन् अपि समालोचनामूलकस्य प्रबन्धस्य महत्त्वं विद्यत एव।

अतः निबन्धयुगे निर्मितानां निबन्धग्रन्थानां यथा आचारसार-आचारभूषण-आचारेन्दु-आचोररत्न-आचारनिर्णयादीनां ग्रन्थानां महत्त्वमाचरवतां सदाचारपालनप्रचरणशीलानां जनानां नितरां दृष्टिमाकर्षयति।

आधुनिकवस्तुवादमये जर्जरिते संसारे तिष्ठन्तः जनाः परिशेषे भगवत् चरणारविन्दप्राप्तिकामनया स्वकल्मशः कलुषितजीवनस्य

पवित्रीकरणाय परमपावनरूपाणां सदाचाराणां सेवां कुर्वन्ति । अतः अद्यापि युगे पश्चात्यजनानामपि हृदये आचारस्य भावना जागर्त्ती । का कथा वा भारतीयानां जनानाम् । आचारं विना न कोऽपि मानवजन्मनः स्वस्य जीवनस्य वा चरितार्थं कर्त्तुं समर्थो भवति । स्मृत्यादिष्वपि आचारस्य महत्त्वं प्रतिपादनाय ग्रन्थस्य प्रारम्भे आचारविषयकं आलोचनं अस्माभिः अवलोक्यते । अतएव उक्तम्- 'आचारवान् लभते ज्ञानम्' । पुनश्च आचाराच्च स्मृतिं ज्ञात्वा स्मृतेश्च श्रुतिकल्पनम्, आचारात् लभते ह्यायुः इत्यादिभिः आचारस्य महत्त्वं प्रतिपादकैः वाक्यैः अस्माभिः आचारस्य कियत् महत्त्वं तदनुमापयितुं शक्यते ।

अत्र आचारनिर्णये कर्मकाण्डस्य कश्चनप्रयोगः श्रीमता गोपालन्यायपञ्चाननभट्टाचार्येण कृतः। तेन धर्मशास्त्रकर्मकाण्डयोर्मध्ये सुमहान् सम्बन्धोऽस्तीति प्रतिपादितम् । अस्मिन्नेव ग्रन्थे एकस्य जनस्य सामग्रिके जीवने कानि कानि कर्माणि कर्त्तव्यानि सन्तीति कृत्वा प्रमुखानां कर्मणामाचरणरूपेण प्रतिपादनं विद्यते । यथा शय्यात्यागानन्तरं प्रातःकृत्यं दन्तधावनं शौचस्नानादिरूपं कर्म प्रतिपादनं कृत्वा पारलौकिके जीवने यथा आचारवान् मनुष्यः सुखं नित्यं प्राप्नोतु तन्निमित्तं गर्भधानादिसंस्काराणां होमानां वृषोत्सर्गविधिमपि प्रतिपादयति ग्रन्थकारः ।

**आचारनिर्णयग्रन्थस्योपरि प्राचीनग्रन्थानां प्रभावः-**

श्रीगोपालन्यायपञ्चाननभट्टाचार्यविरचितस्य आचारनिर्णयस्य कालः अष्टादशशताब्दीति समालोचकैः गवेषकैश्च स्थिरीकृतम् । अतः अस्य श्रीगोपालन्यायपञ्चाननभट्टाचार्यस्य रचनायाः तत् पूर्ववर्त्तिनां धर्मशास्त्रप्रणेतॄणां प्रभावः स्वतः एव सिद्धो भवति । तेनापि साक्षात् स्वग्रन्थे मनु-गौतम-वसिष्ठ-आपस्तम्ब-व्यास-पराशर-शंख-हारीत-दक्ष-गोभिल-पारस्कर-आश्वलायनप्रभृतीनां धर्मशास्त्रकाराणां विभिन्नानां पुराणवचनानां महाभारतस्य वचनानामपि ग्रहणं कृतमिति आचारनिर्णयात् प्राप्यते ।

अयं स्वमतस्वतन्त्रभूत्वा शास्त्राणि व्यरचयत् । यत्र प्रतिष्ठितानां धर्मशास्त्रकाराणां वचनानि आकलितानि कृत्वा स्वस्य महत्त्वं प्रदर्शितमनेन । ग्रन्थेऽस्मिन् विभिन्नानां नवीनानां विषयाणामालोचनं जातम् । येषां महत्त्वं शास्त्रदृष्ट्या यथा महत्त्वं स्वास्थ्यरक्षादृष्ट्या, शारीरिकी-मानसिकीसुस्थतानिमित्तं च आवश्यकता नितरां विद्यते । प्राचीनानां मनु-गौतमादिऋषीणां वचनानि एतेन ग्रन्थकारेण गुरुवचनमिव धारितम् । अतः पूर्वाचार्याणां यः प्रभावः अस्मिन् ग्रन्थे यावदलोक्यते न तथा अन्यत्र ।

**अर्वाचीनग्रन्थानामुपरि ग्रन्थस्यास्य प्रभावः-**

ग्रन्थोऽयं तदा विरचनमभूत् यदा धर्मशास्त्ररचनायाः अन्तिमभागः प्रचलति स्म। अष्टादशशताब्देः अनन्तरं अतीव स्वल्पाः धर्मशास्त्रनिबन्धग्रन्थाः विरचिताः । बहूनां ग्रन्थानां समीक्षणं तु जातमेव परन्तु मौलिकधर्मशास्त्रनिबन्धग्रन्थानां रचना अप्राप्तैवास्ति येन केचन पण्डिताः धर्मशास्त्रस्य विभिन्नान् प्रविभागान् आश्रयं कृत्वा यान् ग्रन्थान् विरचितवन्तः तत्र पूर्ववर्त्तिनां समेषां धर्मशास्त्रकर्त्तृणां प्रभावः आपतितः । अतः निःसन्देहेन इदं वक्तुं शक्यते यत् आचारनिर्णयस्य प्रभावः समग्रे वङ्गदेशे आसीदिति ।

**आचारनिर्णयस्य वैशिष्ट्यम्-**

धर्मशास्त्रजगति धर्मशास्त्रसम्बन्धीयाः ये ये ग्रन्थाः विराजमानाः भवन्ति, तत्र हिन्दूधर्मानुरागिणां विश्ववासिनां हिताय परंब्रह्मणः भगवतः निःश्वासभूतस्य वेदस्य अनुयायिनः ये तावत् धर्मप्रतिपादकाः ग्रन्थाः सन्ति तेषां ग्रन्थानां अनित्येऽपि पुरुषार्थकारणात् तेषां ग्रन्थानां प्राधान्यमनस्वीकार्यम् ।

विभिन्नानां धर्मशास्त्राणां पर्यालोचनेन विशिष्टतया मनुमतावलम्बिनः ये धर्मशास्त्रग्रन्थाः भवन्ति तत्र मुख्यतया त्रयाणामेव विषयाणामुल्लेखो दरीदृश्यते । ये च विषयाः आचार-व्यवहार-प्रायश्चित्तरूपाः । एतेषु त्रिषु विषयेषु कस्य आद्यत्वं कस्य वा प्राधान्यं एतस्मिन् विषये समालोचकाः विवदमानाः सन्ति ।

केचन कथयन्ति, प्रायश्चित्तस्य सृष्टि धर्मशास्त्रजगति प्रथामासीत् । तदनन्तरं व्यवहारस्य तदनन्तरं आचारस्य । केषाञ्चित् मते आचारस्य सर्ज्जनं कृत्वा तदनन्तरं प्रायश्चित्तस्य विचारं विधाय तदनन्तरं व्यवहारस्य सर्ज्जनं जातमिति मतपरिष्फुटं भवति ।

यद्यपि भाषादृष्ट्या प्रतिपादनशैली दृष्ट्या पुनश्च धर्मस्य प्रतिपादननिमित्तं कथनावसरे अधर्मस्य पापस्य आलोचनं जातमिति शङ्कया नूनमेव आचारस्य सर्ज्जनं आचारविषये नियमादिवर्णनं प्रथमं जातमिति समीचीनं प्रतिभाति । धर्मविषयकनियमादीनां प्रतिपादनं कृत्वा पापे किं प्रायश्चित्तं तद्विषये नियमादीनां वर्णनं नूनं जातमिति सम्भाव्यप्रायश्चित्तस्य उद्भवो जातः इति चिन्त्यते । आचार-प्रायश्चित्तानन्तरं प्रजानां परिरक्षणनिमित्तं सुखेन परिपालनाय च व्यवहारस्य उद्भवो जात इति परिकल्प्यते ।

एतेषां विषयत्रयाणां पर्यालोचनेन आचारस्य महत्त्वं वैशिष्ट्यं च स्वतः एव आचारवतां विदुषां पुरतः समायाति । यतो हि 'आचारवान् लभते ज्ञानम्', 'आचाराल्लभते ह्यायुः' इत्यादीनां ऋषिवचनानां समालोचनेन अयं तावत् निष्कर्षः प्राप्यते । अभ्युदयनिःश्रेयसः प्राप्तिनिमित्तं आचारस्य प्राधान्यं महत्त्वं सर्वजनस्वीकृतं भवति ।

बहूनामाचारसम्बन्धीयानां ग्रन्थानां मतमालुञ्च्य तत्र भगवता श्रीगोपालन्यायपञ्चाननभट्टाचार्येण स्वकीय आचारनिर्णयाख्यः ग्रन्थः विरचितः । यत्र ग्रन्थे मनु-गौतम-आपस्तम्ब-बौधायन-आश्वलायन-पारस्कर-योगीश्वर-व्यासः-दक्ष-हारीतादीनां धर्मशास्त्रकाराणां मतानि प्रदाय ग्रन्थस्य वैदुष्यप्रतिपादने सः प्रयत्नं चकार । समेषां ऋषिवचनानां एकार्थप्रतिपादननिमित्तं स्वकीयवैदुष्यं प्रतिभाबलेन ऋषिवचनानां एकवाक्यता प्रतिपादनं च तेन कृतम् ।

आचारनिर्णयग्रन्थेऽस्मिन् अन्यत्र अनुपलब्धानां विषयाणां संग्रहः कृतः । तेषां च वचनानां श्रुतिस्मृतिपुराणादिभ्यः संगृह्य ग्रन्थकलेवरस्य पुष्टिप्रतिपादनं कृतम् । धर्मशास्त्रेण सह कर्मकाण्डस्य

सुमहान् सम्बन्धः बहुप्राचीनकालात् प्रचलितोऽस्ति । तस्मात् अनेनापि स्वकीय आचारनिर्णये ग्रन्थे घटपूजादारभ्य श्राद्ध-संस्कार-होम-वृषोत्सर्गादीनां कर्मकाण्डविषयाणामालोचनाद्वारेण प्रातःकृत्यस्य दन्तधावनस्य, स्नानस्य, वस्त्रधारणस्य, चन्दन-धारणादिविषये च बहु आलोचनं विहितम् ।

अनेन उपर्युक्तप्रमाणेन ग्रन्थस्यापूर्वत्वं वैशिष्टयं च प्रतिभाति। गोपालन्यायपञ्चाननस्य इयं कृतिः अपूर्वा, अनन्या, असामान्या, सर्वकालिकी, सर्वदेशिकी च वर्त्तते ।

**धर्मशास्त्रे आचार-व्यवहार-प्रायश्चित्तेषु आचारस्य प्राधान्यनिरूपणम्-**

धर्मशास्त्रेषु वर्णितानां मुख्यभूतानां विषयाणां सम्यग्वर्णनम् आचार-व्यवहार-प्रायश्चित्तादिष्वध्यायत्रयेषु समुपलभ्यते । तत्र आचाराध्याये धर्मस्य [१]चतुर्दशस्थानानि धर्मस्य [२]ज्ञापक-कारक-हेत्वादयस्तथा मनुष्यजीवनस्य मौलिकाचारोऽस्मादेवाचाराध्यायादेव प्राप्यते । अतोऽस्याचारस्य महत्त्वं वरीवर्त्तते ।

तत्र धर्मस्योत्पत्तिरूपेणाचारोऽपि क्वचिद् वर्णितो दृश्यते । यत् उक्तमस्ति [३]श्रीविष्णुसहस्रनामस्तोत्रे-

"आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः" ।

अर्थात् धर्म आचारतः जन्म लभते, यस्य च रक्षा भगवताऽच्युतेन

---

१. पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥
-याज्ञवल्क्यस्मृतिः (१/३) ।

२. देशकाल उपायेन द्रव्यं श्रद्धासमन्वितम् ।
पात्रे प्रदीयते यत्तत्सकलं धर्मलक्षणम् ॥
श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
सम्यक् सङ्कल्पजः कामो धर्ममूलमिदं स्मृतम् ॥
-याज्ञवल्क्यस्मृतिः (१/६-७) ।

३. विष्णुसहस्रनामस्तोत्रम्- श्लो. १३७ ।

क्रियते । विषयेऽस्मिन् [४]वसिष्ठेनोक्तं यत्-

आचारो परमो धर्मः सर्वेषामिति निश्चयः ।
जीवाचारः परीतात्मा प्रेत्य चेह च नश्यति ॥

आचारहीनः इहलोके न सुखं प्राप्नोति नापि परलोके । पुनश्चापि [५]वसिष्ठेनोक्तं यत्-

आचारहीनस्य तु ब्राह्मणस्य
वेदाः षडङ्गास्त्वखिलाश्च यज्ञाः ।
कां प्रीतिमुत्पादयितुं समर्था
अन्धस्य दारा इव दर्शनीया ॥

अर्थात् आचारं विना वेदज्ञोऽपि सुखं नानुभवति । यथा अन्धस्य हृदये सुन्दर्याः प्रियतमायाः सौन्दर्यानुभूतेः सुखं न जन्यते । अस्मादेव कारणादस्माकं भारतीयधर्मशास्त्राणि आचारस्य महत्त्वं भूयो भूयः उपदिशन्ति । यथा तत्र धर्मशास्त्रकारैः स्पष्टमुद्घोषितम् यत्-

आचारो भूतिजनन आचारो कीर्त्तिवर्द्धनः ।
आचाराद् वर्धते ह्यायुराचारो हन्त्यलक्षणम् ॥

दीर्घसुखमयजीवनयापनार्थमेवाचारो निमित्तभूतः यश्चाचारो धर्मस्यापि मूलत्वेन स्वीकृतः । [६]विष्णुपुराणे अस्य सदाचारस्य व्याख्यातीव सुन्दरतया विद्यते । यथा-

साधवः क्षीणदोषास्तु सच्छब्दः साधुवाचकः ।
तेषामाचरणं यत्तु सदाचार स उच्यते ॥

अर्थात् सच्छब्दादेव साधुत्वं प्रतीयमानं भवति । स एव साधुः यः दोषरहितः । इत्थं साधुजनस्याचरणं सदाचारपदेनोच्यते । महर्षिणा [७]मनुनापि सदाचार इत्थं व्याख्यातम् यथा-

---

४. वसिष्ठधर्मसूत्रे (६/१) ।
५. वसिष्ठधर्मसूत्रे (६/४) ।
६. विष्णुपुराणे (३/११/३) ।
७. मनुस्मृतिः (१/१७-१८) ।

सरस्वतीदृष्द्वत्योर्देवनद्यो यदन्तरम् ।
तं देवनिर्मितं देशं ब्रह्मावर्त्तं प्रचक्षते ॥
तस्मिन् देशे य आचारः पारम्पर्यक्रमागतः ।
वर्णानां सान्तरालानां स सदाचार उच्यते ॥

वर्णाश्रमरहितजातीनां स्वपरम्परागतप्राचीनसंस्कृतकर्त्तव्य एवाचारो वा सदाचार इत्युच्यते । सदाचारः नियतरूपेण शाश्वत्कालं यावत् तिष्ठति ।

"चतुर्णामपि वर्णानामाचारश्चैव शाश्वतः ।"

इति मनुस्मरणादवगम्यते ।

उपनिषदि आचारशुद्धिविषयिणी चर्चा बहुत्र प्राप्यते । यथा- 'आचारशुद्धो सत्वशुद्धिः' सत्वशुद्धौ ध्रुवा स्मृतिः', स्मृतिशुद्धौ सर्वग्रन्थीनां विप्रमोक्षः' अर्थादाचारशुद्धिद्वारान्तःकरणस्यार्थात् आत्मनः शुद्धिरन्तकरणशुद्धेनिश्चयात्मिका स्मृतेरुदयस्ततः स्मृतेर्नाम बुद्ध्याः शुद्धिमाध्यमेन सर्वबन्धनात् मुक्तिर्लभ्यते ।

सदाचारः कायिकवाचिकमानसिकभेदेन त्रिधा विभज्यते । स चापि जैनसम्प्रदाये सम्यक् ज्ञानम्, सम्यक् दृष्टिः, सम्यक् चरित्रमित्यादिपदेनोच्यते । एतेषु स्नानादिना पवित्रीकरणं, ब्रह्मचर्यपालनं, अहिंसाचरणं, परोपकारः, देवपूजनमित्यादीनि- कायिकसदाचारस्यान्तर्गतानि कर्माणि भवन्ति । सत्यं प्रियं च सम्भाषणं, सद्ग्रन्थनामध्ययनं, भगवन्नामकीर्त्तनादिकर्माणि वाचिक- सदाचारस्यान्तर्गतानि । साम्यकरुणाध्यैर्यसहानुभूतिशुद्धभावादीनि मानसिकसदाचारेऽन्तर्भूक्तानि । सदाचारो दीर्घजीवनस्याधारः, सुलक्षणभावपरिपूरणात्मकः । अतोऽस्य महत्त्वं [८]मनुनोद्घोषितम् । यथा चोक्तम्-

सर्वलक्षणहीनोऽपि यः सदाचारवान् नरः ।
श्रद्दधानोऽनसूयश्च शतं वर्षाणि जीवति ॥

---

८. मनुस्मृतिः (४/१५८) ।

पुनश्च-

[९]आचाराल्लभते ह्यायुराचारादीप्सिताः प्रजाः ।
आचाराद्धनमक्षयमाचारो ह्यन्त्यलक्षणम् ॥

किञ्च-

[१०]आचाराद् विच्युतो विप्रो न वेदफलमश्नुते ।
आचारेण तु संयुक्तः सम्पूर्णफलभाग् भवेत् ॥

आचाराध्याये मिताक्षराकारेण विज्ञानेश्वरेण षड्विधस्मार्त्तो धर्मोऽभिहितः तत्र वर्णधर्मः, आश्रमधर्मः, वर्णाश्रमधर्मः, गुणधर्मः, निमित्तधर्मः, साधारणधर्मश्चेति धर्मस्य षाडविध्यं प्रतिपादितं तेन । तत्र वर्णधर्मो ब्राह्मणो नित्यं मद्यं वर्जयेदित्यादिः । आश्रमधर्मो अग्नीन्धनभैक्षचर्यादिः । वर्णाश्रमधर्मो पलाशदण्डो ब्राह्मणस्येत्यादिः । गुणधर्मः शास्त्रीयाभिषेकादिगुणयुक्तस्य राज्ञः प्रजापालनादिः । निमित्तधर्मो विहिताकरणप्रतिसिद्धसेवननिमित्तप्रायश्चितादिः । साधारणधर्मो अहिंसादिः- 'माहिंस्यात्सर्वभूतानि' इत्याचाण्डाल-साधारणो धर्मः । इत्यस्मिन् प्रसङ्गे भविष्यत्पुराणे उक्तमस्ति यत्-

स तु पञ्चविधः प्रोक्तो वेदमूलः सनातनः ।
वर्णधर्मः स्मृतस्त्वेक आश्रमाणामतः परम् ॥
वर्णाश्रमस्तृतीयस्तु गौणो नैमित्तिकस्तथा ।
वर्णत्वमेकमाश्रित्य यो धर्मः सम्प्रवर्त्तते ॥
वर्णधर्मः स उक्तस्तु यथोपनयनं नृप ।
यस्त्वाश्रमं समाश्रित्य अधिकारः प्रवर्त्तते ॥
स सत्वाश्रमधर्मस्तु भिक्षादण्डादिको यथा ।
यो वर्णत्वमारभत्वं योऽधिकृत्य प्रवर्त्तते ॥
स वर्णाश्रमधर्मस्तु मौञ्जी या मेखला यथा ।
यो गुणेन प्रवर्त्तेत गुणधर्मः स उच्यते ॥
यथा मूर्द्धाभिषिक्तस्य प्रजानां परिपालनम् ।

---

९. मनुस्मृतिः (४/१५६) ।
१०. मनुस्मृतिः (१/१०९) ।

निमित्तमेवमाश्रित्य यो धर्मः संप्रवर्त्तते ॥
नैमित्तिकः स विज्ञेयः प्रायश्चित्तविधिर्यथा ॥

**आधुनिकसमाजे आचारस्योपादेयता-**

विदितमस्ति तत्र भवतां समेषां विश्ववासिनां हिताय बहुभिः ऋषिभिः बहूनि शास्त्राणि विरचितानि । परन्तु पाश्चात्यसभ्यतानुकरणसंवेदनशीलाः जनाः एतेषु शास्त्रेषु विगतस्पृहाः भवन्ति । येषां हृदये न कदाचिदपि धर्मभावना जागर्त्ति, ये तावत् सर्वदैव लोभ-मोह-मद-ऐश्वर्यादिभिः सम्बन्धिताः भूत्वा परद्रव्यापहरणे व्याकुलाः कथञ्चित्प्रकारेण स्वधनस्य वर्द्धनकामाः दृष्टिपथारूढाः भवन्ति, तेषां जनानां कृते शास्त्रस्य का वा आवश्यकता, परन्तु संसारेऽस्मिन् ये केचन अल्पसंख्यकाः धार्मिकभावनया धार्मिकाः भारतीय-संस्कृतेरुन्नायकाः सदाचारकुशलीनः जनाः सन्ति, तेषां धर्मबलेन इयं पृथिवी उज्जिवीता वर्त्तते, तेषामेव सज्जनानां कृते एतानि शास्त्राणि नितरां पूज्यतमानि भवन्ति । आचारहीनानां जनानां बाहुल्यात् संसारोऽयं विनाशस्य समीपवर्त्ति भवति इति नास्ति तत्र विचिकित्सा काचिदपि । आचारबलेन सर्वेऽपि जनाः सदाचारवन्तः भूत्वा संसारं सुखेन स्थापयितुं समर्थाः भवन्ति । आचारहीनाः जनाः स्खलिताः भवन्ति। स्वस्य पारलौकिके जीवने यथा सुखं भवेत् अस्मिन् लोके च यथा यशस्विनः भवेयुः तन्निमित्तमाचारपालनस्य आवश्यकता नितरां वर्त्तते । अतः श्रद्धाविहीनेऽपि समाजे जनानां संसारस्य च सुरक्षानिमित्तं चतुर्विधानां पुरुषार्थानां प्राप्तये च आचार एव मुख्यो मार्गः भवति । धर्महीनस्य पुरुषार्थे योग्यता न भवति । अतः आचारस्य श्रेयसाधनत्वात् 'आचारवान् लभते ज्ञानं, आचारः परमो धर्मः' एतानि यानि ऋषिवचनानि सन्ति तानि सर्वाण्येव अद्यतनसमाजस्य ध्येयानि भवन्ति । उक्तं च मनुना ''आचारो हन्त्यलक्षणं' अर्थात् अशुभस्य अनाचारस्य, पापस्य विनाशनिमित्तं आचारस्योपयोगित्वं सर्वमान्यं भवति ।

**व्यवहारिकजीवने महामहोपाध्याय श्रीगोपालन्यायपञ्चानन-भट्टाचार्यकृत आचारनिर्णयस्य महत्त्वम्-**

भारतीयो धर्मो महानद इव बहूनां धर्माचाराणां सङ्गममेव वैपुल्यमवाप । अत्र प्राधान्येन विराजमानस्य हिन्दुधर्मस्य चरमं परमं चोद्देश्यं भवति पुरुषार्थचतुष्टयस्य प्राप्तिः । सर्वप्राचीनत्वेन परिगणितस्यापौरुषेयस्य चास्य वेदस्यानुमापकतया स्मृत्यादीनामपि धर्मे प्रामान्याद् धर्मशास्त्रमेव पुरुषार्थचतुष्टयस्य प्रमुखं प्रतिपादकमिति महतः प्रमोदस्य विषयः । संसारेऽस्मिन् मनुष्यस्य विकाशाय धर्मस्यातीवावश्यकतास्ति । यतः धर्मं विना मानवः केनचित् प्रकारेण ऐहिक-पारत्रिकसमृद्धिसाधकं जविनमतिवाहयितुं समर्थो न भवति। एतदर्थं, मनु-गौतम-याज्ञवल्क्यादयः मुनयः धर्मस्य स्वरूपं ग्रन्थमाध्यमेन लिपिवद्धं चक्रुः । अत्र पुनः मुनिप्रणीतानां स्मृतिशास्त्राणां मध्ये कदाचिच्च समुपस्थितानां विरुद्धमतानामेक-वाक्यताकरणाय भाष्यकाराणां परिप्रकाशो जातः । तदनन्तरं देशकालादिधर्माणां देशकालादिभेदेन च व्यवहारसौकर्याय विभिन्नेषु प्रान्तेषु कालक्रमेण धर्मशास्त्रीयनिबन्धग्रन्थानामुद्भवः सञ्जातः ।

अखिलः वेदो हि धर्मस्य मूलस्वरूपः । तदनुमापकत्वेन स्मृतिरेव तस्य द्वितीयं प्रमाणम्, तृतीयं च [११]सदाचारः, वैकल्पिके आत्मतुष्टिरेव चतुर्थस्थानं भजते । यद्यप्येतेषां [१२]ज्ञापकहेतुत्वेन गणनं याज्ञवल्क्येन विहितम्, तथापि समाजेन सह आचारस्य सम्पर्को अन्यापेक्ष्यया सरलः । श्रुतयः स्मृतयश्च शास्त्राणि भवति । तदनुरोधेन

---

११. वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥
-मनुस्मृतिः (२/६) ।

१२. श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
सम्यक् सङ्कल्पजः कामो धर्ममूलमिदं स्मृतम् ॥
-याज्ञवल्क्यस्मृतिः (१/८) ।

आचारस्य प्रामाण्यात् श्रुतिः स्मृतिश्च द्वे नयने । श्रुतेः स्मृतेश्च ज्ञानाभावात् सदाचारस्य ज्ञानमसम्भवम् । आचाराभावे तु मनुष्यः अन्ध इव प्रतीयमानो भवति । यतो हि सदाचारेणैव मनुष्यस्य सत्प्रवृत्तिः जायते । तथैव धर्मस्य रक्षणं भवतीति । यत् किमपि कार्यमाचारयुक्तं भवति तर्हि तत्र नूनमेव फलं मिलिष्यति इति [१३]मनुराशयः । तस्मादाचारः परमो धर्मो भवतीति सिद्धान्तः सर्वसम्मतः । भ्रष्टाचारजनस्तु इहलोके सुखाद् विच्युतो भूत्वा परलोकेऽपि [१४]दुःखमनुभवति ।

श्रौतस्मार्त्तपरम्परायां सर्वत्र समाजेऽस्मिन् दृष्टिपथारूढायमानानामाचाराणां श्रौतत्वं स्मार्त्तत्वं च कल्पयितुं शक्यते । यद्यपि कुत्रचित् प्रकाशितासु आचारप्रतिपादकानि वाक्यानि नैव दृश्यन्ते, तथापि तानि प्रक्षिप्तानि स्युरिति मत्वा आचाराणां प्रामाण्यमङ्गीकर्त्तव्यम् । आचारशब्दस्य विमर्शो निखिलेषु धर्मशास्त्रेषु दृश्यते ।

धर्मशास्त्रेषु समुपलभ्यमानेषु मुख्यतः आचार-व्यवहार-प्रायश्चित्तभागेषु आचारभागस्य प्राधान्यात् प्राथम्येन सर्वत्रैव तस्य सन्निवेशः दृश्यते । आचाराध्याये सर्वेषां वर्णानामाश्रमिणां च जनानां दैनन्दिनमाचरणं सर्वैः विचारितम् । परन्तु वानप्रन्थसन्यासिनोः आश्रमित्वेऽपि तयोः आचरणस्य प्राश्चित्तरूपत्वात् योगीश्वरेण तयोः सन्निवेशः प्रायश्चित्ताध्याये कृतः । अपि च गौतमानुसारं वानप्रस्थस्यैव चतुर्थाश्रमत्वं सिद्ध्यति[१५] । वानप्रस्थसन्यासिनोरन्तिमाश्रमत्वात्

---

१३. आचाराद् विच्युतो विप्रो न वेदफलमश्नुते ।
आचारेण तु संयुक्तः सम्पूर्णफलभाग् भवेत् ॥
-मनुस्मृतिः (१/१०९) ।

१४. आचारः परमो धर्मः सर्वेषामिति निश्चयः ।
हीनाचारः परीतात्मा प्रेत्य चेह च नश्यति ॥
-वसिष्ठधर्मसूत्रे (६/१) ।

१५. ब्रह्मचारी गृहस्था भिक्षुभैक्षानसः ।
-गौतमधर्मसूत्रे (१/३/२) ।

तयोः प्रायश्चित्तरूपता सर्वसम्मता । तेन योनिजन्मरूपकल्मष-हानिसिद्धये प्रायश्चित्ताध्याये वानप्रस्थसन्यासधर्मयोरन्तर्भावः योगीश्वरेण सम्पादितः ।

आचारो भारतीयधर्मस्य मूलाधारः । सर्वेषु धर्मसूत्रेषु आचारस्य प्राधान्यं परिलक्ष्यते । समाजस्य तथा व्यक्तेः समुन्नतिः आचारद्वारेणैव सम्भवति । यावत्पर्यन्तं भारतीयसंस्कृतिषु परम्परासु च आचारस्य प्राथम्यं वर्त्तते तावत्पर्यन्तं धर्मस्योद्देश्यसाधनं भविष्यति। धृतिक्षमादमोऽस्तेयेन्द्रियनिग्रहादिमानवीयगुणाः मानवाय शान्तिं सुखं च प्रयच्छन्ति । वेदादिसर्वशास्त्रविद् यद्यपि आचारभ्रष्टो अथवा धृतिदयाक्षमाऽस्तेयेन्द्रियनिग्रहादिमानवीयगुणविहीनो भवति, तर्हि तस्य सत्यपि शास्त्रज्ञाने स आचारभ्रष्ट इति कथ्यते । अधीतानि च शास्त्राणि निष्फलानि भयन्ति[१६] । मनुमतानुसारं यः श्रद्धावान् सदाचारवान् यश्च पुनः परदोषानभिधाता स अन्येषां सर्वेषामपि मानवीयसुलक्षणानामभावे नैव शतायुर्भवति[१७] । दुराचारः पुरुषः सर्वदा निन्दितो भवति । व्याधिग्रस्तो भूत्वा दुःखं च लभते । तस्माद् सदाचारयुक्तः भवितव्यः । सदाचारवान्नरः न केवलं दीर्घजीवी भवति, अपि तु दोषयुक्तानि शारीरिककुलक्षणानि नाशयति । वाञ्छिताः प्रजाः पुत्रपौत्रान् प्रभूतं च धनमपि सदाचारवान् प्राप्नोति[१८] । दुराचारेण जनः पतितो भवति, परन्तु सदाचारः स्वर्गं

---

१६. आचारहीनस्य तु ब्राह्मणस्य वेदाः षडङ्गास्त्वखिलाः स यज्ञाः ।
कां प्रीतिमुत्पदयितुं समर्था अन्धस्य दारा इव दर्शनीयाः ॥
-वसिष्ठधर्मसूत्रे ।

१७. सर्वलक्षणहीनेऽपि यः सदाचारवान्नरः ।
श्रद्दधानोऽनुसूयश्च शतं वर्षाणि जीवति ॥
-मनुस्मृतिः (४/१५८) ।

१८. आचाराल्लभते ह्यायुराचारादीप्सिताः प्रजाः ।
आचाराद्धनमक्षयमाचारो हन्त्यलक्षणम् ॥
-मनुस्मृतिः (४/१५६) ।

प्रापयति । न केवलं धर्मः परोपकारेण परोपदेशेन परकार्यसाधनेन च यथार्थरूपमाप्नुयात्, किन्तु सज्जनानां महत्वपूर्णमाचरणमेव धर्मशब्दवाच्यं भवतीति राधाकृष्णन्महोदयानामभिमतम्[१९] । अतः निखिलशास्त्रललामभूतयोः वेद-धर्मशास्त्रयोः अर्थानुमापकत्वेन संसारेऽस्मिन् जीवनस्य सुनिर्वाहार्थं सर्वविधस्यापि कर्मण आवश्यकत्वेन संस्कृतिसंस्कृतयोः संरक्षणकर्त्तृत्वेन सर्वमान्यत्वेन च पवित्रतमेऽस्मिन् भारतवर्षे आचारस्य महत्त्वं अतीव गौरवपूर्णम् ।

**ताडपत्रमातृकाणां विवरणम्**

श्रीमता भगवता धर्मशास्त्रपारावारपारिणा महामहोपाध्यायेन गोपालन्यायपञ्चाननभट्टाचार्येण हिन्दुधर्मानुरागिणां कुलपरम्परानुगामिनां धर्मार्थकाममोक्षकांक्षिणां जनानां हिताय च आचारनिर्णयाख्यः ग्रन्थः विरचितः ।

नगराग्रगण्याः मन्दिरमालिन्याः उत्कलराजधान्याः पार्वतीपतिविलासस्य शैवतीर्थस्य प्रधानपीठस्य भुवनेश्वरस्य उत्कलराज्यसंग्रहालयस्य नवीनतयाकविकुलमुकुटायमानस्य कविताकामिनिविलासस्य पृथिवीप्रसिद्धगीतगोविन्दरचनागानकुशलस्य साक्षाद् भगवतः करुणाप्राप्तस्य परमवैष्णवस्य श्रीजयदेवस्य नाम्ना परिचितोऽयं संग्रहालयः । तस्य प्रासादे तालपत्रमातृकाविभागे ग्रन्थस्यास्य आचारनिर्णयस्य प्रतिलिपिद्वयं सुसंरक्षितं वर्त्तते ।

एका तालपत्रमातृका पश्चिमवङ्गस्य मेदिनीपुरमण्डलात् संगृहीता वर्त्तते इति तत्रत्य मातृकाविवरणग्रन्थाद् विज्ञायते । अपरा च तालपत्रमातृका उत्कलराज्यस्य कटकमण्डलात् संगृहीताऽस्ति। प्रथममातृकायाः संग्रहालयस्य क्रमिकसंख्या डी.एच्. ५०० यस्या मातृकायाः ग्रहणं मया मूलग्रन्थत्वेन कृतम् ।

लीलापुरुषोत्तमस्य भगवतः जगन्नाथदेवस्य परमपावने नीलाचलक्षेत्रे भगवतः श्रीमन्दिरस्य सिंहद्वारे अवस्थितस्य

१९. श्रीदेवयानः - १९७६-७७ पृ- २४ ।

श्रीरघुनन्दनपाठागारस्य पोथिविभागे एका तालपत्र प्रतिलिपि आसीत्। यस्याः मातृकायाः पुनर्लेखनं कृत्वा दिवंगतैः भारतवर्षराष्ट्रपतिपुरस्कृतैः वेदधर्मशास्त्रसाहित्यादिनानाविद्या-विद्योतितान्तःकरणैः नानाशास्त्ररचनापाटवैः तत्र भवद्भिः गुरुवर्यैः पण्डितश्रीकुलमणिमिश्रमहोदयैः लिखिता एका प्रतिलिपि यस्याः ग्रहणं 'ख' पुस्तकत्वेन विहितं मया ।

ग्रन्धस्यास्य प्रतिलिपिप्राप्तिनिमित्तं विशेषविवरणनिमित्तं च आड्यार् ग्रन्थागारं मद्रासनगरं कलिकतास्थित एसियाटिक्सोसाइट निमित्तं, पुण्यपत्तनस्थितं डेकानमहाविद्यालयं प्रति अपि च कुपुस्वामिगवेषणाप्रतिष्ठानं प्रति मया पत्राचारः कृतः परन्तु एतेभ्यः संस्थानेभ्यः पुण्यपत्तनस्थित डेकानमहाविद्यालयं त्यक्त्वा न कस्मादपि मम पत्रस्य उत्तरमवाप्तं मया ।

एतस्माद् विज्ञायते आचारनिर्णयस्य महत्त्वं नूनमेव समग्रे देशे आसीत् । परन्तु कालान्तरे ग्रन्थस्यास्य प्रचलनाभावात् प्रतिलिपयः विनष्टा भवेयुः । महामहोपाध्यायश्रीगोपालन्याय-पञ्चाननभट्टाचार्यस्य संस्कृतजगति सुमहान् प्रवेश आसीदिति नास्ति काचिद् विचिकित्सा यतो हि तेन दायभागनिर्णय-विवादनिर्णय-प्रायश्चित्तनिर्णय-कालनिर्णय-शुद्धिनिर्णय-संक्रान्तिनिर्णयादीनां ग्रन्थानां प्रणयनं कृतम् ।

अप्रकाशितस्य ग्रन्थस्यास्याचारनिर्णयस्य प्रकाशनाय मया यदा चन्तितं तदा एतादृशस्य महतः कर्मणः परिसमाप्तिर्भविष्यति नवेति मन्मनसि महती चिन्ताऽऽसीत् । महतापरिश्रमेण ग्रन्थोऽयं प्रकाशितो भवतीति कृत्या नूनं सुखानुभवं करोमि । ग्रन्थेऽस्मिन् बहुषु स्थानेषु लिपिकारद्वारा वह्वः तृटयः परिलक्षिताः, तेषामशुद्धानां संशोधनं कृत्वा तथा ग्रन्थस्यास्य सुखबोधाय मया मार्गदर्शिन्याख्या एका टीकाऽपि संयोजिता । यया संस्कृतानुरागिणां छात्राणां तथा संस्कृतज्ञानरहितानामपि जनानां ग्रन्थप्रवेशाय सौकर्यं भविष्यति ।

मत्प्रकाशितं स्मृतिसारसंग्रहं दृष्ट्वा बहवः जनाः आचारनिर्णयस्य प्रकाशनं तथा व्याख्या च उत्कलभाषया कर्त्तुं प्रेरितवन्तः । सर्वभारतीयक्षेत्रे ग्रन्थस्यावश्यकताऽस्तीति विचिन्त्य न मया तथा विहितम् । परन्तु कालान्तरे एतद् भविष्यतीति मे विश्वासः । सर्वादौ ग्रन्थस्यास्याचारनिर्णयस्य समुद्धारः भवतु इति मया प्रयासो विहितः ।

आचारनिर्णयस्य प्रकाशनाय न कस्मादपि पणकमेकं धनं मया लब्धम्, अतः शिक्षकजीवने ग्रन्थलेखनं यदि वा सुकरं भवति किन्तु प्रकाशनं न कदापि सौकर्यं विधत्ते । आर्थिकदुर्दशाभ्यन्तरे ग्रन्थोऽयमात्मप्रकाशनं करोति एतदर्थं मम पत्नी-उर्मिलायाः योगदानं सर्वदा स्मरणयोग्यं भवति । सा तु सर्वदा अध्ययन-अध्यापन-लेखन-प्रकाशन-गवेषणादिकर्मकरणाय मां प्रेरयति, यदि तस्या प्रेरणा न भवेत् एतादृशं कर्म मद्द्वारा न सम्भवेदिति मे विश्वासः ।

स्मृतिसारसंग्रहस्य प्रकाशनं दृष्ट्वा मम गुरवः प्रफेसर् डॉ० किशोरचन्द्रमहापात्रमहाभागाः गोपालन्यायपञ्चाननभट्टाचार्यकृत-स्याचारनिर्णयस्य प्रकाशनाय मां प्रेरितवन्तः । अतः तेभ्यः गुरुवरेभ्यः कृतज्ञतां विनिवेदयामि ।

लेखन-पठन-प्रकाशननिमित्तं जीवद्दशायां मां सर्वेदैव मम श्वशुरः उमाकान्तगर्गवटुः नितरां प्रेरितवान् । स तु सर्वदा सर्वसमक्षं प्रशंसां कृत्वा कथयन्तिस्म यदयं नूनं किमपि एतादृशं सारस्वतं कर्म करिष्यति येन समाजस्य महान् उपकारः साधितो भविष्यति । अतः तस्य स्मृतिनिमित्तं ग्रन्थमाचारनिर्णयं समर्पयाम्यहम् ।

भुवनेश्वरस्थित श्रीजयदेवराज्यसंग्रहालयात् प्रतिलिपिं कृत्वा ग्रन्थस्यास्य प्रकाशनाय पाण्डुलिपिनिर्माणे मम छात्री श्रीमती दीप्तिराणीसिह्ना बहु उपकारं कृतवती, अतः ग्रन्थप्रकाशनकाले तामपि संस्मरामि ।

महता परिश्रमेण संगणक(कंप्युटर)यन्त्रद्वारा ग्रन्थस्यास्य प्रकाशनाय श्रीयुक्तः देवव्रतरथमहोदयः सर्वदा उपकारं कृतवान् । अतः स धन्यवादार्हः ।

परिशेषे श्रीनीलाचलनाथस्य जगन्नाथदेवस्य चरणारविन्दे संप्रार्थ्य संस्कृतज्ञानां सविधे ग्रन्थोऽयं समादृतो भवतु इति विचिन्त्य विरमामि विस्तरादिति ।

दीपावल्युत्सवः — विदुषामनुचरः

पुरी — **पण्डितश्रीअतुलकुमारनन्दशर्मा**

# सूचीपत्रम्

* * *

॥ श्री गणेशाय नमः ॥

# अथ नित्याचारः

आचारस्य श्रेयः साधनत्वमाह-

आचारप्रभवो धर्म इति वेदविदो विदुः ।
नह्यनाचारिणो लोकाः प्रवदन्ति मनीषिणः ॥
- महा. शा.प. १०७/४७/१३५, १३७ ।

आचाराल्लभते ह्यायुराचारल्लभते प्रजाः ।
आचारात् बलमैश्वर्यमाचारात्सर्वलक्षणम् ॥
- महा.शा.प. १०६/६ ।

अनुशासनिके पर्वण्यभिहितम्-

आचाराल्लभते ह्यायुराचाराल्लभते श्रियम् ।
आचारात् कीर्त्तिमाप्नोति पुरुषः प्रेत्य चेह च ॥
दुराचारो हि पुरुषो नेहायुर्विवदन्ते महत् ।
ग्रसन्ति चास्य भूतानि तथा परिभवन्ति च ॥

---

जगन्नाथं नमस्कृत्य लीलादारवरूपिणम् ।
ग्रन्थविबोधनार्थाय क्रियते मार्गदर्शिनी ॥

टिप्पणी-

ग्रन्थकृत् गभवता गोपालन्यायपञ्चाननभट्टाचार्येण सतामनुसरणपूर्वकं ग्रन्थस्याचारनिर्णयस्य निर्विघ्नपरिसमाप्तिकामनया श्रीगणाशाय नमः इति नमस्कारात्मकं मङ्गलाचरणं विहितम् । अस्मिन् आचारनिर्णये ग्रन्थे आचारस्य प्राधान्याद् आचारे च गणेशपूजनादिकं गृहस्थस्यावश्यकत्वात् घटपूजायां पञ्चोपचारे पूजने च गणेशः प्रधान इति पुराणादिषु प्राप्यते । उक्तञ्च- ''गणेशभास्करविष्णुशिवदुर्गा तथैव च'' इति बाक्यात् गणेशस्य प्रामुख्यं दृश्यते । अतः गणेशस्य प्राधान्यात् गणेशाय नमः इति ग्रन्थकारः प्रतिपादयति । श्रीगणेशाय नमः इत्यत्र पूर्णयशः प्राप्तिं ग्रन्थसम्पूर्णत्वादिनिमित्तं लक्ष्मीवृद्ध्यर्थं च श्रीशब्दस्यात्र प्रयोगः ।

तस्माद् कुर्यादिहाचारं यदीच्छेद् भूतिमात्मनः ।
अपि पापशरीरस्य आचारो हन्त्यलक्षणम् ॥
आचारलक्षणो धर्मः सन्तश्चाचारलक्षणाः ।
साधूनाञ्च यथावृत्तमेतदाचारलक्षणम् ॥

मनुः-

आचारः परमो धर्मः श्रुत्युक्तः स्मार्त्त एव च ।
तस्मादस्मिन् यदा युक्तो नित्यं स्यादात्मवान् द्विजः ॥
आचाराद्विच्युतो विप्रो न वेदफलमश्नुते ।
आचारेण तु संयुक्तः सम्पूर्णफलभाग् भवेत् ॥
एवमाचारतो दृष्ट्वा धर्मस्य मुनयो गतिम् ।
सर्वस्य तपसो मूलमाचारं यगृहुः परम् ॥

-म.स्मृ. १/१०८-११० ।

हारीतोऽपि स्मरति-

साधवः क्षीणदोषाः स्युः सच्छब्दः साधुवाचकः ।
तेषामाचरणं यत्तु सदाचारः स उच्यते ॥

मनुरप्याह-

सरस्वती दृषद्वत्योर्देवोनद्योर्यदन्तरम् ।
तं देवनिर्मितं देशं ब्रह्मावर्त्तं प्रचक्षते ॥
तस्मिन् देशे च य आचारः पारम्पर्यक्रमागतः ।
वर्णानां सान्तरालानां स सदाचार उच्यते ॥

-म.स्मृ. २/१७-१८ ।

प्रातः कृत्यम्-

ब्राह्मे मुहूर्त्ते चोत्थाय स्मरेद्देववरानृषीन् ।
इति ब्रह्मपुराणात् । ब्रह्मादीन् संस्मरेत् ॥

मनुरप्याह-

ब्राह्मे मुहूर्त्ते बुध्येत धर्मार्थाननुचिन्तयेत् ।
कायक्लेशांश्च तन्मूलान् वेदतत्त्वार्थमेव च ॥

याज्ञवल्क्यः-

ब्राह्मे मुहूर्त्ते उत्थाय चिन्तयेदात्मनो हितम् ।
धर्मार्थकामान् स्वे काले यथाशक्ति न हापयेत् ॥

या.स्मृ. १/११५ ।

विष्णुः-

उत्थायोत्थाय बोधव्यं किमद्य सुकृतं कृतम् ।
दत्तं वा दापितं वाऽपि वाक्सत्या चापि भाषिता ॥
उत्थायोत्थाय बोधव्यं महद्भयमुपस्थितम् ।
मरण-व्याधि-शोकानां किमद्य निपतिष्यति ॥

अङ्गिराः-

उत्थाय पश्चिमे यामे रात्रिवासः परित्यजेत् ।
प्रक्षाल्य हस्तपादास्यान्युपस्पृश्य हरिं स्मरेत् ॥

विष्णुपुराणेऽपि-

[1]ब्राह्मे मुहूर्त्ते उत्थाय मानसे मतिमान्नृप ।
विबुद्ध्य चिन्तयेद्धर्ममर्थं चास्य विरोधिनम् ॥
अपीड्या तयोः काममुभयोरपि चिन्तयेत् ।
परित्यजेदर्थकामौ धर्मपीडाकरौ नृप ॥
धर्ममप्यसुखोदर्कं लोकविद्विष्टमेव च ॥ इति ।

कूर्मपुराणे-

ब्राह्मे मुहूर्त्ते उत्थाय धर्ममर्थञ्च चिन्तयेत् ।
काय-क्लेशं तदुद्भूतं ध्यायीत मनसेश्वरम् ॥

---

१. ब्राह्ममुहूर्त्त द्विधा- अत्यन्तयात्मको रात्रेरुपान्त्यमुहूर्त्तश्च । तत्राऽऽद्य पितामहोक्तः-रात्रेस्तु पश्चिमो यामो मुहूर्त्तो ब्राह्म उच्यते ।
द्वितीयस्तु विष्णुपुराणे-

रात्रेः पश्चिमयामस्य मुहूर्त्तो यस्तृतीयकः ।
स ब्राह्म इति विज्ञेयो विहितः स प्रबोधनः ॥

ब्राह्मे मुहूर्त्ते विबुध्य उत्थाय धर्मं यथोक्तलक्षणमर्थञ्च मानसे चिन्तयेदिति सम्बन्धः ।

तत्र प्रकारविशेषो वामनपुराणे-

ब्रह्मा मुरारिस्त्रिपुरान्तकारी भानुः शशी भूमिसूतो बुधश्च ।
गुरुश्च शुक्रः शनिराहुकेतवः कुर्वन्तु सर्वे मम सुप्रभातम् ॥
सनत्कुमारः सनकः सनन्दनः सनातनोऽप्यासुरिपिङ्गलौ च ।
सप्तस्वराः सप्त रसातलानि कुर्वन्तु सर्वे मम सुप्रभातम् ॥
सप्तार्णवा सप्तकुलाचलाश्च सप्तर्षयो द्वीपवनानि सप्त ।
भूरादिकृत्वा भुवनानि सप्त कुर्वन्तु सर्वे मम सुप्रभातम् ॥
पृथ्वी सगन्धा सरसास्तथापः स्पर्शी च वायुर्ज्वलनं च तेन ।
नभ सशब्दं सहसा सहैव कुर्वन्तु सर्वे मम सुप्रभातम् ॥
इत्थं प्रभाते परमं पवित्रं पठेत्स्मरेद्वा शृणुयाच्च तद्वत् ।
दुःस्वप्ननाशस्त्विह सुप्रभातं भवेच्च नित्यं भगवत्प्रासादात् ॥
पुण्यश्लोको नलो राजा पुण्यश्लोका युधिष्ठिरः ।
पुण्यश्लोका च वैदेही पुण्यश्लोको जनार्द्दनः ॥
अश्वत्थामा बलिर्व्यासो हनुमांश्च विभीषणः ।
कृपः परशुरामश्च सप्तैते चिरजीविनः ॥
सप्तैतान्संस्मरेन्नित्यं मार्कण्डेयमथाष्टमम् ।
जीवेद्वर्षशतं साग्रमपमृत्युर्विवर्जितः ॥
अहल्या द्रौपदी सीता तारा मन्दोदरी तथा ।
पञ्चकन्या स्मरेन्नित्यं मानहान्या न बाध्यते ॥

महाभारते-

कर्कोटकस्य नागस्य दमयन्त्या नलस्य च ।
ऋतुपर्णस्य राजर्षे कीर्त्तनं कलिनाशनम् ॥
कार्त्तवीर्यार्जुनो नाम राजबाहुः सहस्रधृक् ।
योऽस्य संकीर्त्तयेन्नाम कल्पमुत्थाय राघवः ॥
न तस्य वित्तनाशः स्यान्नष्टंश्च लभते पुनः ।

-महाभारते. २/३१/१२/१४१ ।

ततश्च-

अहं देवो न चान्योऽस्मिन् ब्रह्मैवास्मिन् न शोकभाक् ।
सच्चिदानन्दरूपोऽहं नित्यः मुक्तः स्वभावतः ॥

इत्यात्मानं भावयित्वा पठेत् ।

लोकेश चैतन्यमायाधिदेव श्रकिान्तविष्णो भवदाज्ञायैव ।
प्रातः समुत्थाय तव प्रियार्थं संसारयात्रा मनुवर्त्तयिष्ये ॥
यानामि धर्मं न च मे प्रवृत्तिः जानाम्यधर्मं न च मे निवृत्तिः ।
त्वया हृषिकेशः हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमि ॥

ततः ॐ प्रियदातायै भुवे नमः इति भुवं नमस्कृत्य तत्र दक्षिणचरणं न्यसेत् ।

## अथ विण्मूत्रोत्सर्गः

आपस्तम्बः-

मुत्रपुरीषे कुर्याद्दक्षिणदिशं दक्षिणपरां वा दक्षिणपरां [२]नैरुतिम् ।
नैऋत्यादिषु - विक्षेपमतीत्याभ्यधिकं भुवः ।
दूरादावसथान्मूत्रं पुरीषञ्च समाचरेत् ॥

इति विष्णुपुराणवचनात् । प्रयोगपारिजाते दक्षः-

उभे मूत्रपुरीषे तु पूर्वमादाय मृत्तिकाम् ।
आददानश्च वै पश्चात्सचैलो जलमाविशेत् ॥
न च प्रह्वो न चेत्तिष्ठन्नाशुचिर्न लपेद्विजः ।
क्रमादग्न्यादिवाच्यं तद्विमुखोनाहरेन्मृदम् ॥

विष्णुः-

ब्राह्मे मुहूर्त्ते मूत्रपुरीषोत्सर्गं कुर्यादिति ।

---

२. आचाराच्चावसथान् मूत्रपुरीषे कुर्याद्दक्षिणां दिश ।
दक्षिणा परां वा इति मुद्रित आपस्तम्बपुस्तके पाठः ।
- आप.ध. सू. १/११/२/२ ।

शौनकः-

ग्रामाद्बहिः समागत्यमलमूत्रे समुत्सृजेत् ।

अत्राङ्गिराः-

उत्थाय पश्चिमे रात्रे तत आचम्य चोदकम् ।
अन्तर्द्धाय तृणभूमिं शिरः प्रावृत्य वाससा ॥
वाचं नियम्य यत्नेन निष्ठीवोच्छ्वासवर्जितः ।
कुर्यान्मूत्रपुरीषे तु शुचौ देशे समाहितः ॥

पराशरः-

ततः प्रातः समुत्थाय कुर्याद्विन्मूत्रमेव च ।
नैऋत्यामिषुविक्षेपमतीत्याभ्याधिकं भुवः ॥
तिरस्कृत्योच्चरेत्काष्ठं पत्रं लोष्ठं तृणानि वा ।
नियम्यो प्रयतो वाचं संवीताङ्गोऽवगुण्ठितः[३] ॥

मनुरपि-

दूरावसथान्मूत्रं दूरात् पाद्यवसेचनम् ।
उच्छिष्टान्नमिषेकश्च दूरादेव समाचरेत् ॥

आपस्तम्बोऽपि-

दूरादावसथान्मूत्रपुरीषे कुर्याद्दक्षिणान्दिशमपरां वा ।

## अथ तृणलक्षणम्

शुष्कैस्तृणैर्वा काष्ठैर्वा पत्रैर्वेणुदलेन वा ।
मृन्मयैर्भाजनैर्वापि अन्तर्धाय वसुन्धराम् ॥

इति वायुपुराणवचनैक्यवाक्यत्वात् । अत्र तृणैः काष्ठैश्च याज्ञिकः । तृणं याज्ञिकः काष्ठमित्यापस्तम्बीयात् ।

मनुः-

तिरस्कृत्योच्चरेत्काष्ठं पत्रं लोष्ठं तृणानि वा ।

---

३. तिरस्कृत्य अन्तर्धाय । 'प्रयतः' शुचिः । संवीताङ्ग आच्छादितदेहः । 'अवगुण्ठितः' प्रावृतशिराः । - आचारमयूखः पृ- ९ ।

नियम्यो प्रयतो वाचं संवीताङ्गोऽवगुण्ठितः ॥

-मनुस्मृतिः ४/४९ ।

तृणनियमान् विशिनष्टिः-

शिरः प्रावृत्य कुर्वीत सकृन्मूत्रविसर्जनम् ।
अङ्गानि चैव वासेन तृणैः सच्छाद्य मेदिनीम् ॥

अत्र दिङ्मुखनियममाह-

यमः-

प्रत्यङ्मुखस्तु पूर्वाह्लेऽपराह्ले प्राङ्मुखस्तथा ।
उदङ्मुखस्तु मध्याह्ले निशायां दक्षिणामुखः ॥

याज्ञवल्क्यः-

दिवा संध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः ।
कुर्यान्मूत्रपुरीषे तु रात्रौ चेद्दक्षिणामुखः ॥

-याज्ञवल्क्यस्मृतिः १/१६ ।

मनुः-

मूत्रोच्चारसमुत्सर्गं दिवा कुर्यादुदङ्मुखः ।
दक्षिणाभिमुखो रात्रौ सन्ध्ययोश्च तथा दिवा ॥ इति ।

-मनुस्मृतिः ४/५० ।

## दिङ्मुखनिचमः

धर्मप्रश्ने-

प्राङ्मुखोऽन्नानि भुञ्जीत नोच्चरेद्दक्षिणामुखः ।
उदङ्मुखो मूत्रं कुर्यात्प्रत्यक्पादावनेजनम् ॥

अत्रापवादमाह मनुः-

छायायामन्धकारे च रात्रावहनि वा द्विजः ।
यथासुखमुखः कुर्यात् प्राणबाधा भयेषु च ॥

-मनुस्मृतिः ४/५१ ।

मदनरत्ने हारीतः-

उच्चारे मैथुने चैव प्रस्रावे दन्तधावने ।

श्राद्धे भोजनकाले च षट्सु मौनं समाचरेत् ॥

आचारप्रदीपे अङ्गिरा-

संध्ययोरुभयोर्जाप्ये भोजने दन्तधावने ।
पितृकार्ये च दैवे च तथा मूत्रपुरीषयोः ॥
गुरूणां सन्निधौ दाने योगे चैव विशेषतः ।
एषु मौनं समतिष्ठन्स्वर्गं प्राप्नोति मानवः ॥

आपस्तम्बः-

न च सोपानत्को मूत्रपुरीषे कुर्यात् । इति ।

सायणीये-

करस्योदकपात्रश्च कुर्यान्मूत्रपुरीषके ।
तज्जलं मूत्रसदृशं सुरापानेन तत्समम् ॥

प्रयोगपारिजाते-

गृहीत्वा जलपात्रं तु विण्मूत्रं कुरुते यदि ।
तज्जलं मूत्रसदृशं पीत्वा चान्द्रायणं चरेत् ॥
मलमूत्रं त्यजेद्विप्रो विस्मृत्योपवीतधृक् ।
उपवीतं तदुत्सृज्य गृह्यादन्यनवं तदा ॥

विण्मूत्रोत्सर्गे यमः-

कृत्वा यज्ञोपवीतं तु पृष्ठतः कण्ठलम्बितम् ।
विण्मूत्रन्तु गृही कुर्यात् यद्वा कर्णे समाहितः ॥

## अथ व्यवस्थामाह

सांख्यायनः-

यदि द्विवासा भवति तदा कण्ठलम्बितं कृत्वा ।
यदि पुनरेकवस्त्रस्तदा यज्ञोपवीतं कर्णे कृत्वा ॥

मूत्रपुरीषोत्सर्गं कुर्यादिति । मनुः-

नान्नमद्यादेकवासा न नग्नः स्नानमाचरेत् ।
न मूत्रं पथि कुर्वीत न भस्मानि न गो ब्रजे ॥
न फालकृष्टे न जले न चित्यां न च पर्वते ।

न जीर्णदेवायतने न वल्मीके कदाचन ॥
न ससत्वेषु गर्त्तेषु न गच्छन्नाप्यवस्थितः ।
न नदीतीरमासाद्य न च पर्वतमस्तके ॥
वा वाग्नि विप्रमादित्यमपः पश्यन् तथैव च ।
न कदाचन कुर्वीत विण्मूत्रस्य विसर्जनम् ॥

मनुस्मृतिः- ४/४५-४८ ।

तथा महाभारते-

प्रत्यादित्यं प्रत्यगस्तं प्रतिगां च प्रतिद्विजम् ।
मेहन्ति ये च पथिषु ते भवन्ति गतायुषः ॥

आपस्तम्बः-

न च सोपानात् मूत्रपुरीषे कुर्यात् ।

यमोऽपि-

पल्वलानि तडागश्च नदीप्रस्रवणानि च ।
नगगोमयभस्मनि फालकृष्टं च वर्जयेत् ॥
तुषाङ्गारकपालानि देवतायतनानि च ।
राजमार्गश्मशानानि क्षेत्राणि च खलानि च ॥
उपरुद्धो न सेवेत छायां वृक्षं चतुष्पथम् ।
उदकं चोदकान्तं च पन्थानां च विसर्ज्जयेत् ॥
वर्जयेत् वृक्षमूलानि चैत्य-अभ्र-विलानि च ।
अथावकृष्य विण्मूत्रं लोष्टकाष्ठतृणादिना ।
[४]उदस्तवासा उत्तिष्ठेत् दृढं विधृतमेहनः ॥

व्यासः- नाश्ममूलं फलाङ्गारैरुन्नृज्यानस्थि वर्हिषा ।

आपस्तम्ब-

अस्मानं लोष्टमाद्रानोषधि वनस्पतीनूर्ध्वानाच्छिद्य
मूत्रपुरीषयोः शुन्धने वर्जयेत् ॥

आपस्तम्बधर्मसूत्रे १/११/१/२४ ।

४. उदस्तवासाः कटिदेशादुत्क्षिप्तवस्त्रः ।

# अथ शौचम्

देवलः-

धर्म्मविद्दक्षिणं हस्तमधः शौचे न योजयेत् ।
तथा च वामहस्तेन नाभेरुद्‌र्ध्वं न शोधयेत् ॥
प्रकृतिस्थितिश्चेत्स्यात्कारणादुभयक्रिया ।
प्रकृतिकारणादिति यागादिग्रहणम् ॥

मरीचिः-

तिसृभिश्चाऽऽतसात्पादौ शौध्यौ गुल्फातथैव च ।
हस्तौ त्वामणिबन्धाच्च लेपगन्धापकर्षणौ ॥

ब्रह्मपुराणम्-

उद्धृत्योदकमादाय मृत्तिकां चैव वाग्यतः ।
उदङ्मुखो दिवा कुर्याद्रात्रौ चाद्दक्षिणामुखः ॥

विष्णुपुराणे-

शाौचावशिष्टां शौचार्थं न दद्यात् लेपसम्भवाम् ।
अन्तः प्राध्यावपन्नां च हलोत्खातां च पार्थिव ॥

शातातपः-

शुचौ देशे तु संग्रह्या शर्कराश्च विवर्जिताः ।
रक्ता गौरास्तथा श्वेता मृत्तिकास्त्रिविधाः स्मृताः ॥
न मृदं मोदकं चापि निशायां न च गोमयम् ।
न गोमूत्रं प्रदोषे च गृह्णीयाद्बुद्धिमान्नरः ॥

देवलस्तु-

यावत् स्वशुद्धिं मन्येत तावच्छौचं समाचरेत् ।
प्रमाणं शौचसंख्यायां न विप्रैरुपदिश्यते ॥

पैठीनसि-

मुत्रोत्सर्गे कृते शौचं न स्यादन्तर्जलाशये ।
अन्यत्रोत्सृज्य कुर्यात् तु सर्वदैव समाहितः ॥

दक्षः-

**शौचे यत्नः सदा कार्यः शौचमूलो द्विजः स्मृतः ।**
**शौचाचारविहीनस्य समस्ता निस्फलाः क्रिया ॥**

आनुशासनिके शौचेतिकर्त्तव्यता दर्शिताः-

**शौचं कुर्याच्छनैर्धीरो बुद्धिपूर्वमसंकरम् ।**
**विप्रुषस्य यथा न स्युर्यथाचोर्द्ध्वं न संस्पृशेत् ॥**
**बुद्धिपूर्वं प्रयत्नेन यथा नैनः स्पृशेद्धीनान् ॥**

तत्रैव विशेषमाह मरीचिः-

**विप्रे शुक्ला तु मृच्छायै रक्ता क्षत्रे विधीयते ।**
**हारिद्रवर्णा वैश्ये तु शूद्रे कृष्णां विनिर्दिशेत् ॥**

**अनुद्धृतजलनिन्दामाह-**

**पादेन घटमुत्थाय भाजने पूरयेज्जलम् ।**
**तज्जलं [5]मदिरातुल्यं भाण्डस्थं सुरया[6] समम् ॥**
**तेन न शौचं कुर्यादित्यर्थ ।**

**उदकपात्राभावे- करेण जलाशयादुदकग्रहणमाह—**

आदित्यपुराणे-

**[7]रत्निमात्राज्जलातीर्थे कुर्वीतोद्धृतवारिणा ।**
**पश्चात्तच्छोधयेत्तीर्थमन्यथा ह्यशुचिर्भवेत् ॥**

---

५. मद्यं यथा मिताक्षरायां बृहद्विष्णुनाऽपि ब्राह्मणस्यैव मद्यप्रतिषेधो दर्शितः इति विज्ञानेश्वरः-

माधुकमैक्षवं सैरं तालं खर्जुरपानसम् ।
मधुत्थं चैव माधिक्यं मैरेयं नरिकेलजम् ॥
अमेध्यानि दशैतानि मद्यानि ब्राह्मणस्य तु ॥

-याज्ञवल्क्यस्मृतिः ३/२५३ ।

६. सुरा यथा मनुः (११/९४)-

गौडी माध्वी च पैष्टी च विज्ञेया त्रिविधा सुरा ।
यथैवैका तथा सर्वा न पातव्या द्विजोत्तमैः ॥

७. प्रकोष्ठे विस्तृतकरे हस्तो, मुष्टया तु बद्धया । स रत्निः स्यात् इत्यमरः ।

मृत्तिकाग्रहणस्थानमाह-

आहरेन्मृत्तिकां विप्रः कूलात्ससिकतां तथा ।
नाखूत्कृष्टान्न वल्मीकात्पांसुलान्न च कर्दमात् ॥
न मार्गान्नोषराच्चैव शौचशिष्टां परस्य वा ।
एतास्तु वर्जयेद्विद्वान् वृथाशौचं हि तन्मतम् ॥

अधुना वर्ज्यामृदमाह-

विष्णुपुराणे-

वल्मीकमुषिकोत्खातां मृदमन्तर्जलं तथा ।
शौचावशिष्टां गेहाच्च नादथालोपसम्भवाम् ॥
अन्तः प्राप्त्यवपन्नां च हलोत्खातानां च पार्थिव ।
परित्यजेन्मृदस्त्वेताः सकलाः शौचसाधने ॥

-विष्णुपुराणे ३,१०,१६,१८ ।

ग्रहणस्थानमाह-

मनुः-

एका लिङ्गे गुदे तिस्रस्तथैकत्र करे दश ।
उभयोः सप्त दातव्यामृदः शुद्धिमभीप्सता ॥
एतच्छौचं गृहस्थस्य द्विगुणं ब्रह्मचारिणः ।
वानप्रस्थस्य त्रिगुणं यतीनां तु चतुर्गुणम् ॥

-मनुस्मृतिः ५/१३६-१३७ ।

दक्षः-

एकलिङ्गे तु सव्ये त्रिरुभयोर्मुद्द्वयं स्मृतम् ।
मूत्रशौचे समाख्यातं शुक्रे तु द्विगुणं स्मृतम् ॥
यदुक्तं तु दिवाशौचमर्द्धं रात्रौ विधीयते ।
आतुरस्य तदर्द्धं स्यात् तदर्द्धं तु पथि स्मृतम् ॥

वसिष्ठः-

एकालिङ्गे करे तिस्र उभयोमृत्तिकाद्वयम् ।
मूत्रशौचं समाख्यातं शुक्रे तु द्विगुणं भवेत् ॥

शातातपः-

एकालिङ्गे करे सव्ये तिस्रो द्वे हस्तयोर्द्वयोः ।
मूत्रशौचं समाख्यातं शकृति त्रिगुणं भवेत् ॥

बौधायनोऽपि-

पञ्चापाने मृदो योज्या वामपादे तथा करे ।
तिस्रस्तिस्रः क्रमाद्योज्याः सम्यक् शौचं चिकीर्षता ॥ इति ।

वामहस्ते दशदानानन्तरं पृष्ठे षोडशदानमाह- दश मध्ये च षट् पृष्ठे इति शङ्खः-

मेहने मृत्तिकाः सप्त लिङ्गे द्वे परिकीर्त्तिते ।
एकस्मिन् विंशतिहस्ते द्वयोर्ज्ञेयाश्चतुर्दश ॥
तिस्रस्तु मृत्तिका देयाः कृत्वा तु नखशोधनम् ।
तिस्रस्तु पादयोर्देया शौचकामस्य नित्यशः ॥
शौचमेतद्गृहस्थानां तथा गुरुनिवासिनाम् ।
द्विगुणं स्याद्वनस्थानां यतीनां त्रिगुणं भवेत् ॥

बौधायनः-

देशं कालं तथाऽऽत्मानं द्रव्यं द्रव्यप्रयोजनम् ।
उपपत्तिमवस्थां च ज्ञात्वा शौचं प्रकल्पयेत् ॥

मनुः-

यावन्नपैत्यमेध्याक्तो गन्धो लेपश्च तत्कृतः ।
तावन्मृद्वारि चादेयं सर्वासु द्रव्यशुद्धिषु ॥

आदित्यपुराणे-

स्त्रीशूद्रयोरर्धमानं शौचं प्रोक्तं मनीषिभिः ।
दिवाशौचस्य निश्चर्घं पथि पादौ विधीयते ॥
आर्त्तः कुर्यात्यथाशक्तिः शक्तः कुर्यायथोदितम् ।

वृद्धपराशरः-

उपविष्टश्च विण्मूत्रं कर्तुं यस्तु न विन्दति ।
स कुर्यादर्धश्चौचं तु स्वस्य शौचस्य सर्वथा ॥ इति ।

ऋष्यशृङ्गः-

धाराशौचं न कर्त्तव्यं शौचशुद्धिमभीप्सुना ।
चुलके नैव कर्त्तव्यं हस्तशुद्धि विधानतः ॥

अङ्गिराः-

मूत्रोत्सर्गं द्विजः कृत्वा न कुर्याच्छौचमात्मनः ।
मोहाद्भुक्तं त्रिरात्रेण जलं पीत्वा विशुध्यति ॥

एतन्मूत्रमात्रोत्सर्गे स्मृतिः । इति ।

ब्रह्मपुराणे-

द्वे लिङ्गे मृत्तिके देये गुदे सप्त यथाक्रमम् ।
द्वात्रिंशत् वामहस्ते च तथा देयास्तु मृत्तिकाः ॥
द्वयोस्तु षोडशान्यास्तु पुनः सप्त च सर्वदा ।
पादयोर्द्वे गृहीत्वा च सुप्रक्षालितपाणिना ॥
द्विराचम्य ततः शुद्धः स्मृत्वा विष्णुं सनातनम् ॥

बौधायनः-

मूत्रवद्रेतसः समुत्सर्गे इति ।

यमः-

द्वे लिङ्गे मृत्तिके देये गुदू पञ्च करे दश ।
उभयोः सप्त दातव्याः पुनरेका गुदे तथा ॥
तत् अर्धप्रसृतिमात्रा तु प्रथमा मृत्तिका स्मृता ।
द्वितीया च तृतीया च तदर्धार्धा प्रकीर्त्तिता ॥

दक्षः-

तिस्रोऽपाने दशैकस्मिन्नुभयो सप्त मृत्तिकाः ।

वशिष्ठः-

पञ्चापाने दशैकस्मिन्नुभयो सप्त मृत्तिकाः ।
उभयोः पादयोः सप्त लिंङ्गे द्वे परिकीर्त्तिते ॥

मनुः-

विण्मूत्रोत्सर्गशुध्यर्थं मृद्वार्यादेयमर्थवत् ।

दैहिकानां मलानाञ्च शुद्धिषु द्वादशस्वपि ॥
वसाशुक्रमसृङ् मज्जा मूत्रविद् घ्राणकर्णविद् ।
श्लेष्माश्रु दूषिका स्वेदो द्वादशैते नृणां मलाः ॥
-मनुस्मृतिः ५/१३४-१३५ ।
षण्णां क्रमेण चैतेषां शुद्धिरुक्ता मनीषिभिः ।
मृद्वारिणा तु पूर्वेषामितरेषां तु वारिणा ॥

यमः-

मूत्रे तिस्रः पादयोस्तु हस्तयोस्तिस्र एव च ।
मृदः पञ्चदशामेध्ये हस्तादीनां विशेषतः ।
एतदात्मीयमूत्रादिस्पर्शशौचमुदाहृतम् ॥

देवलः-

देशकालं तथात्मानं द्रव्यं द्रव्यप्रयोजनम् ।
उपस्थितामवस्थाञ्च ज्ञात्वा शौचं प्रकल्पयेत् ॥
यस्मिन् देशे कृतं शौचे वारिणा तत्तु शोधयेत् ॥

बौधायनः-

आददीत मृदः पञ्च षट्सु पूर्वेषु शुद्धये ।
उत्तरेषु तु षट्स्वद्भिः केवलाभिर्विशुध्यति ॥

मनुः-

मूत्रे तिस्रः पादयोस्तु हस्तयोस्तिस्र एव च ।
मृदः पञ्चदशामेध्ये हस्तादीनां विशेषतः ॥
एतदात्मीयमूत्रादिसंस्पर्शन उदाहृतम् ।
परस्य शोणितस्पर्शे रेतोविण्मूत्रजे तथा ॥
चतुर्णामपि वर्णानां द्वात्रिंशन्मृत्तिकाः स्मृताः ।

स एव-

ऊर्ध्वं नाभेर्यानि खानि तानि मेध्यानि सर्वशः ।
यान्यधस्तादमेध्यानि देहाच्चैव मलाश्च ताः ॥
-मनुस्मृतिः ५/१३२ ।

गुदे मृत्परिमाणमाह-

दक्षः-

अर्द्धं प्रसूतिमात्रा तु प्रथमा मृत्तिका स्मृता ।
द्वितीया च तृतीया च तदर्द्धेन प्रकीर्त्तिता ॥
प्रथमा प्रसूतिर्ज्ञेया द्वितीया तु तदर्द्धिका ।
तृतीया मृत्तिकार्ज्ञेया त्रिभागकरपूरणी ॥

गुदादन्यत्र परिमाणमाह-

न्यूनाधिकं न कर्त्तव्यं शौचं शुद्धिमभीप्सता ।
प्रायश्चित्तेन पूतेन विहितातिक्रमे कृते ॥ इति ।
शौचे यत्नः सदा कार्यः शौचमूलो द्विजः स्मृतः ।
शौचाचारविहीनस्य समस्ता निष्फला क्रिया ॥ इति ।

यदात्वक्तकारणेन गन्धलेपक्षयस्तु तत् तदधिके करणेऽपि न दोषः ।

याज्ञवल्क्यः-

गृहीतश्निश्चोत्थाय मृद्भिरस्युद्धृतैर्जलैः ।
गन्धलेपक्षयकरं शौचं कुर्यादतन्द्रितः ॥ इति ।

- याज्ञवल्क्यस्मृतिः १/१७ ।

अनुपनीतद्विजशूद्राणां संख्यानियममाह-

ब्रह्मपुराणे-

न यावदुपनीयन्ते द्विजाः शूद्रास्तथाऽङ्गना ।
गन्धलेपक्षयकरं शौचमेषां विधीयते ॥ इति ।
यावत्तु शुद्धिं मन्येत तावच्छौचं विधीयते ।
प्रमाणं शौच संख्यायां न विप्रैरुपदिश्यते ॥

ब्रह्माण्डपुराणे-

सुनिर्णिते मृदं दद्यान्मृदन्ते त्वप एव च ।
सुनिर्णिक्ते केवलश्च जलं प्रक्षालिते इति ॥

दक्षः-

दातव्यमुदकं तावद् यावन्मृन्नैवगच्छति ।

## शौचस्य शुद्धिम्

ऋष्यशृङ्गः-

यस्मिन् स्थाने कृतं शौचं वारिणा तत्तु शोधयेत् ।
न शुद्धिस्तु भवेत्तस्य मृत्तिकां यो न शोधयेत् ॥

मनुः-

एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् ।
त्रिगुणं स्याद् वनस्थानां यतीनां तु ऋतुर्गुणम् ॥

-मनुस्मृतिः ५/१३७ ।

शौचानन्तरं हारितः-

गोमयेन मृदा वा कमण्डलुं परिसृज्य पूर्ववदुपस्पृश्यादित्यं सोममग्निं वा वीक्षेत ॥

आपस्तम्बः-

अह्निशौचं यथा प्रोक्तं निश्यर्द्धं तु तदिष्यते ।
पथिपादस्तु विज्ञेय आर्त्तः कुर्यायथाबलमिति ॥

वृद्धपराशरेण यथा-

कृत्वाऽथ शौचं प्रक्षाल्य पादौ हस्तौ च मृज्जलैः ।
निबद्धशिखकच्छस्तु द्विजः आचमनं चरेत् ॥
कृत्वोपवीतं सव्यांसे वाङ्मनः कायसंयतम् ॥ इति ।

व्याघ्रपादः-

शौचं तु द्विविधं प्रोक्तं वाह्यमाभ्यन्तरन्तथा ।
मृज्जलाभ्यां स्मृतं वाह्यं भावशुद्धिस्तथाऽन्तरम् ॥
गङ्गातोयेन कृत्स्नेन मृद्भारैश्च नगोपमैः ।
आ मृत्योश्चाचरन् शौचं भावदृष्टो न शुध्यति ॥ इति ।

## शिखाबद्धविशेषम्

ब्रह्मपुराणम्-

गायत्र्या तु शिखां वध्वा नैऋत्यां ब्रह्मरन्ध्रतः ।

पश्चात्तु जुटिकां वध्वा सर्वकर्मसमारभेत् ॥

याज्ञवल्क्यः-

अन्तर्जानुः शुचौदेशे उपविष्ट उदङ्मुखः ।
प्राग् वा ब्राह्मण तीर्थेन द्विजोनित्यमुपस्पृशेत् ॥

-याज्ञवल्क्यस्मृतिः १/१८ ।

अन्तर्जानु जानुर्नोर्मध्ये हस्तौ कृत्वेति विशेषः ।

भविष्ये-

समानं चरणं कृत्वा तथा बद्धशिखो नृप ।

आचमेदित्यनुवृतौ देवलः-

शिखां वध्वा वसित्वा तु निर्निक्तेवाससी शुभे ।
तुष्णीं भूत्वा समादाय नोद्वसन्न विलोकयन् ॥

ब्रह्मादितीर्थमाह-

कनिष्ठादेशिन्यङ्गुष्ठमूलन्यग्रं करस्य च ।
प्रजापतिपितृब्रह्मा देवतीर्थान्यनुक्रमात् ॥

-याज्ञवल्क्यस्मृतिः १/१९ ।

द्विजो न शूद्रादि । अतएवाह-

स्त्रीणां त्रैदेशिकं तीर्थं शूद्रजातेस्तथैव च ।
सकृदाचमनात् शुद्धिरेतयोः चोभयोरपि ॥

ब्रह्माविरोधे तु मनुः-

ब्राह्मेण विप्रस्तीर्थेन नित्यकालमुपस्पृशेत् ।
कायत्रैदशिकाभ्यां वा न पित्र्येण कदाचन ॥
अङ्गुष्ठमूलस्य तले ब्राह्मं तीर्थं प्रचक्षते ।
कायमङ्गुलिमूलेऽग्रे दैव्यं प्रित्र्यं ततोरधः ॥

-मनुस्मृतिः २/५८-५९ ।

मार्कण्डेयपुराणे-

सपवित्रेण हस्तेन कुर्यादाचमनक्रियाम् ।
नोच्छिष्टं तत् पवित्रन्तु भुक्तोच्छिष्ठन्तु वर्जयेत् ॥

कात्यायनः-

**अनन्तगर्भिणं साग्रं कुशं[८] द्विदलमेव च ।**
**प्रादेशमात्रं विज्ञेयं पवित्रं यत्रकुत्रचित् ॥**

अनन्तगर्भिणं- अन्तर्गतशून्यम् । तथा शौनकः-

**अनन्तगर्भिणौ योतौ कुशौ प्रादेश सम्मितौ ।**
**एतदभावे पवित्र चतुष्टयं त्रयं वासमुद्रधृतकरवचनात् ।**

तथा-

**चतुर्भिदर्शिभिः पत्रै त्रिभिर्द्वाभ्यामथापि वा ।**
**पवित्रं कारयेन्नित्यं प्रशस्तं सर्वकर्मसु ॥**

तथा ईशानदीपिकायाम्-

**त्रिभिः पत्रैः कृतं यत्तु पवित्रं शान्तिकं भवेत् ।**
**चतुर्भिः पौष्टिकं ज्ञेयं पञ्चभिश्चाभिचारिकम् ।**
**देवकार्यं भवेद्याभ्यां पितृकार्यं तथैव च ॥**

---

८. कुशलक्षणं यथा-

सप्तपत्राः शुभादर्भास्तिलक्षेत्र समुद्भवाः ।
अप्रसूताः स्मृताः दर्भाः प्रसूतास्तु कुशाः स्मृताः ॥
समुलाः कृतपाः प्रोक्ताश्छिन्नाग्रास्तृणसज्ञिताः ॥

इति निर्णयसिन्धौ टिप्पण्यां- पृ. २८७ ।

कुशः- तृणविशेषः । वीरमित्रोदये परिभाषाप्रकाशे कौशिकः-

सप्तपत्रा शुभा दर्भास्तिलक्षेत्रसमुद्भवाः ।
ते प्रशस्ता द्विजातीनां दैवेप्रित्र्ये च कर्मणि ॥
अप्रसूताः स्मृता दर्भाः पुष्पितास्तु कुशाः स्मृताः ।
समूलाः कुतपाः प्रोक्ताश्छिन्नाग्रास्तृणसज्ञिताः ॥
अप्रसूताः अपुष्पिता इति मित्रमिश्राः ॥

वीरमित्रोदयपरिभाषाप्रकाशे- पृ. ९८ ।

कुशप्रतिनिधयः-

कुशाः काशा यवादूर्वा उशीशस्य सकुन्दुराः ।
गोधूमा ब्रीहयः मुञ्जा दशदर्भा सवल्वजाः ॥

धर्मशास्त्रशब्दकोशः- पृ. २१० ।

विद्याकरवाजपेयी-

**पवित्रं च द्विजः कुर्यात्कुशपत्र द्वयेन च ।**

**पत्र त्रयेण वा कुर्यादेकपत्रेण कर्हिचित् ॥**

ब्रह्मग्रन्थियुतमपि पवित्रकं कार्यम् ।

यथा स्मृतिः-

**कर्मकाले तु कुर्वीत सपवित्रं त्वनामिका ।**

**लङ्घयेदेकपर्वास्यां द्वितीयं नैव लङ्घयेत् ॥**

**अनामिकायाः प्रथमं पर्व स्वर्णेन पुरयेत् ।**

**द्वितीयं दर्भसंयुक्तं कार्यं विप्रेण नित्यशः ॥**

प्रथमद्वितीयमधो गणनयामन्तव्यम् । जपहोमदानस्वाध्याय पितृत्र्पणे यथाशक्तिः सुवर्णरजत कुशत्रयं धार्यम् ।

**जपे होमे च दाने च स्वाध्याये पितृतर्पणे ।**

**अशून्यं तु करं कुर्यात् सुवर्णरजतैः कुशैः ॥**

इति व्यासवचनात् ।

**''अनामिकायां सुवर्णादिधारणावगतेः कुशत्रय रजतधारणं तत्रैवेति'' द्वैतनिर्णये मिश्राः ।**

तन्नेति गौडाः यथा-

**अनामिका धृतं हेम तर्जन्यां रौप्यमेव च ।**

**कनिष्ठिका धृतं खड्गं तेन पूतो भवेन्नरः ॥**

इति योगीयाज्ञवल्क्यविरोधात् ।

**जीवपितृकादौ विशेषमाह-**

**पादुके चोत्तरीयं च तर्जन्यां रौप्यधारणम् ।**

**न जीवत्पितृकः कुर्याज्ज्येष्ठे भ्रातरि जीवति ॥**

उदकस्य ग्रहणप्रकारं परिमाणमाह-

भरद्वाजः-

**आयत्तं सर्वतः कृत्वा गोकर्णाकृतिमत्करम् ।**

**संहिताङ्गुलिना तोयं गृहीत्वा पाणिना द्विजः ॥**

मुक्ताङ्गुष्ठकनिष्ठेन शेषेणाचमनं चरेत् ।
भावमञ्जनमात्रस्तु संगृह्य त्रिः पिबेदपः ॥ इति ।

याज्ञवल्क्यः-

अद्भिस्तु प्रकृतिस्थाभिर्हीनाभिः फेनवुद्वुदैः ।
हृत्कण्ठतालुगाभिस्तु यथासंख्यं द्विजातयः ॥
शुद्धेरन् स्त्रियः शूद्राश्च सकृत् स्पृष्टाभिरन्ततः ।

-याज्ञवल्क्यस्मृतिः १/२१ ।

प्रचेताः-

अनुष्णाभिरफेनाभिः पूताभिर्वस्त्र चक्षुषा ।
हृद्गताभिरशब्दाभिः त्रिश्चतुर्वाद्भिराचमेत् ॥

मनुरपि-

हृद्गाभिः पूयते विप्रः कण्ठगाभिस्तु भूमिपः ।
वैश्योऽद्भिः प्रशिताभिस्तु शूद्रः स्पृष्टाभिरत्नतः ॥ इति ।

-मनुस्मृतिः २/ ६२ ।

## [१]आचमनप्रकारः

संवृत्याङ्गुष्ठमूलेन द्विः प्रमृज्यात्ततो मुखम् ।
संहृत्य तिसृभिः पूर्वमास्यमेवमुपस्पृशेत् ॥

---

१. शुद्ध्यर्थं जलपानम् । तच्च वारत्रयं प्रणवोच्चारणेन विष्णुपदोच्चारणेन केशवादि नामत्रयेण वा । उच्चारणं त्वत्र मानसम् ।

-धर्मशास्त्रशब्दकोशः- पृ. ७७ ।

आचमनं मुखम् । 'दर्व्याचमनं प्रक्षाल्यनिदधाति' ।

-पारस्करः २/१४/१९ ।

दर्व्या आचमनं मुखं प्रक्षाल्य निदधाति स्थापयति इति हरिहरभाष्ये ।
गोभिलस्तु हस्तद्वये सपवित्रत्वं प्रशंसति-

उभयत्र स्थितैः दर्भैः समाचमति यो द्विजः ।
सोमपानफलं तस्य भुक्त्वा यज्ञफलं भवेत् ॥

- आचारभूषणम्- पृ. २९ ।

**अङ्गुष्ठेन प्रदेशिन्या घ्राणं पश्चादनन्तरम् ।**
**अङ्गुष्ठानामिकाभ्यां च चक्षु श्रोत्रे पुनः पुनः ॥**
**नाभिं कनिष्ठाङ्गुष्ठाभ्यां हृदयं तु तलेन वै ।**
**सर्वाभिस्तु शिरः पश्चाद्बाहु चाग्रेण संस्पृशेत् ॥**

पुनः पुनरिति प्राच्यादीनां गोलकद्वया प्रायेण इति श्रीदत्तः ।

वीक्षाणानुक्षणयोरपवादमाह-

यमः-

**रात्रावमीक्षितेनापि शुद्धिरुक्ता मनीषिभिः ।**
**उदक्रेनातुराणाञ्च तथोष्णेनोष्णपापिनाम् ॥**

पादं प्रक्षालनं विशेषयति देवलः-

**प्रथमं प्राङ्मुखं स्थित्वा पादौ प्रक्षालयेच्छनैः ।**
**उदङ्मुखो वा दैवत्ये पैतृके दक्षिणामुखः ॥**

क्रममाह पारस्करः-

**"सव्यं पादं प्रक्षाल्य दक्षिणं प्रक्षालयति सामवेदि क्रममिति मिश्राः ।" "सर्वशाखि साधारणमिति स्मार्त्ताः । वस्तुतः सव्य पादप्रक्षाल्य दक्षिणपादमवनेजयेदिति गोभिलदर्शनात् ।"**

सामयजुर्वेदीनां वामदक्षिणक्रम इति मिश्रोक्तं साधीयः । इदं तु स्वकर्त्तु प्रक्षालनपरं परकृति विशेषमाह-

**द्विजाय दक्षिणं प्रयच्छेत् । सव्यं शूद्रायेति ।**

अत्र क्षत्रियवैश्यकर्त्तुकप्रक्षालने नियमः ।

मुखमार्जनान्तं व्यासः-

**वामहस्तं पादौ शिरश्च दक्षिणेन पाणिना ।**
**जलेन अभ्युक्षेदिति सामवेदि क्रमः ॥** यजुर्वेदीयानां मते ।

गौतमः-

**पादौ चाभ्युक्षेत् । खानि चोपस्पृशेच्छीर्ण्यानि मूर्द्धनि च दद्यात् ।**

-गौतमधर्मसूत्रे १/१/३७-३९ ।

**इन्द्रियविशेषमाह-**

मनुः-

**त्रिराचमेदपः पूर्वं द्विः प्रमृज्यात्ततो मुखम् ।**
**खानि चैव स्पृशेदद्भिरात्मनं शिर एव च ।।**

-मनुस्मृतिः २/६० ।

व्यासः-

**ततः स्पृशेन्नाभिदेशं पुनरापश्च संस्पृशेत् ।**

इन्द्रियस्पृशेनन्तरं भविष्यपुराणे-

**यद्भुमावुदकं वारि समुत्सृजति मानवः ।**
**वासुकिप्रमुखान्नागान् तेन प्रीणाति भारत ।।**
**विना यज्ञोपवीतेन तथा मुक्तशिखो द्विजः ।**
**अप्रक्षालितपादस्तु आचान्तोऽप्यशुचिर्भवेत् ।।**
**बहिर्जानुरुपस्पृश्य एकहस्तार्पितैर्जलैः ।**
**सोपानत्कास्तथा तिष्ठन्नैव शुद्धिमवाप्नुयात् ।।**

जलस्थलयोरुभयो कर्मानुष्ठानार्थन्तु-

**जलस्थलैकचरणे न आचमनं कर्त्तव्यमित्याह** । पैठीनसिः ।
**अन्तरुदक आचान्तोऽन्त शुद्धो भवति ।**
**बहिरुदक आचान्तो बहिरेव शुद्धः स्यात् ।**
**तस्मादन्तरेकं बहिरेकं च कृत्वा पादमाचमेत् ।।**
सर्वत्र शुद्धो भवति ।

तथा च विष्णुः-

**जान्वोरूर्ध्वं जले तिष्ठन्नाचान्तः शुचितामियात् ।**
**अधस्ताच्छकृत्कृत्वाऽपि समाचान्तो न शुद्ध्यति ।।**

हारीतः-

**आर्द्रवासा जले कुर्यात्तर्पणाचमनं जपम् ।**
**शुष्कवासा स्थले कुर्यात्तर्पणाचमनं जपम् ।। इति ।**

# अथ आचमननिमित्तानि

वायुपुराणे -

निष्ठीवने तथाभ्यङ्गे तथा पादावसेचने ।
उत्तिष्ठस्य च सम्भाषादशुच्युपहतस्य च ॥
सन्देहेषु च सर्वेषु शिखां मुक्त्वा तथैव च ।
विना यज्ञोपवीतेन नित्यमेवमुपस्पृशेत् ।
उत्तिष्ठस्यापि संस्पर्शे दर्शने चान्त्यजन्मनाम् ।

हारीतः -

स्त्रीशूद्रोच्छिष्टाभिभाषणे मूत्रपूरीषोत्सर्गदर्शने देवतामभिगन्तुकाम आचमेत् ।

मनुः -

कृत्वा मूत्रं पुरीषं वा खान्याचान्त उपस्पृशेत् ।
वेदमध्येष्यमाणश्च अन्नमश्नश्च सर्वदा ॥

मनुस्मृतिः- ५/१३८ ।

कूर्मपुराणे -

चण्डालम्लेच्छसम्भाषे स्त्रीशूद्रोच्छिष्टभाषणे ।
उच्छिष्टं पुरुषं स्पृष्ट्वा भोज्यं चापि तथाविधम् ॥
आचमेदश्रुपाते च लोहितस्य तथैव च ।
अग्नेर्गवामथालम्भे स्पृष्ट्वा प्रयतमेव वा ॥
स्त्रीणामथात्मनः स्पर्शे नीवीं वा परिधाय च ।

यमोऽपि -

उत्तीर्योदकमाचामेदवतीर्य तथैव च ।
एवं स्यात्तेजसा युक्तो वरुणेनापि पूजितः ॥

वसिष्ठः -

क्षुते निष्ठीवने सुप्ते परिधानेऽश्रुपातेन ।
पञ्चस्वेतेषु वाचामेच्छोत्रं वा दक्षिणं स्पृशेत् ॥

ब्रह्मपुराणे-

क्षुते श्लेष्मपरित्यागेऽधीते वा भक्षिते सति ।
अवर्णस्य च सम्भाषे सुप्ते वा दन्तधावने ।।
आचम्य प्रयतो भूत्वा ततः शुद्धो भवेन्नरः ।

शङ्खः-

कृत्वा मूत्रं पुरीषं च स्नात्वा भोक्तुमनास्तथा ।
भुक्त्वा क्षुत्वा तथा सुप्त्वा तथा चाम्भोऽवगाह्य च ।।

देवलः-

रेतमूत्रशकृन्मोक्षे भोजनेऽध्वपरिश्रमे ।
शौचमेवंविधं प्रोक्तमीषच्चान्यत्र दृश्यते ।।

मनुरपि-

सुप्त्वा क्षुत्वा च भुक्त्वा च निष्ठीव्योक्त्वानृतानि च ।
पीत्वापोऽध्येष्यमाणश्च आचमेत् प्रयतोऽपि सन् ।।

मनुस्मृतिः ५/१४५ ।

पराशरः-

क्षुते निष्ठीवने चैव दन्तोच्छिष्टे तथानृते ।
पतितानां च सम्भाषे दक्षिणं श्रवणं स्पृशेत् ।।
प्रयागादीनि तीर्थानि गङ्गायाः सरितस्तथा ।
विप्रस्य दक्षिणे कर्णे नित्यं तिष्ठन्ति देवताः ।।
आदित्यो वरुणः सोमो अग्निर्वायुस्तथैव च ।
विप्रस्य दक्षिणे कर्णे सन्तीति मनुरब्रवीत् ।।

मार्कण्डेयपुराणे-

सम्यगाचम्य तोयेन कियां कुर्वीत वै शुचिः ।
देवतानामृषीणाञ्च पितृणाञ्चैव यत्नतः ।।
कुर्वीतालम्भनं चापि दक्षिणश्रवणस्य वा ।
यथा विभवतो ह्येतत् पूर्वाभावे ततः परम् ।।
न विद्यमाने पूर्वोक्ते उत्तरप्राप्तिरिष्यते ।

## द्विराचमननिमित्तानि

याज्ञवल्क्यः-

स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्योपसर्पणे ।
आचान्तः पुनराचामेद्वासोविपरिधाय च ॥

-याज्ञवल्क्यस्मृतिः १/१९६ ।

ब्रह्मपुराणे-

होमे भोजनकाले च सन्ध्ययोरुभयोरपि ।
आचान्तः पुनराचामेज्जपहोमार्च्चनादिषु ॥

बौधायने-

भोजने हवने दाने उपहारे प्रतिग्रहे ।
हविर्भक्षणकाले च तत् द्विराचमनं स्मृतम् ॥

कूर्मपुराणे-

प्रक्षाल्य पाणी पादौ च भुञ्जानो द्विरुपस्पृशेत् ।
शुचौ देशे समासीनो भुक्त्वा च द्विरुपस्पृशेत् ॥
ओष्ठौ विलोमकौ स्पृष्ट्वा वासोविपरिधाय च ।
रेतो मूत्रपुरीषाणामुत्सर्गेऽयुक्तभाषणे ।
जृम्भित्वाऽध्ययनारम्भे कासश्वासागमे तथा ॥
चत्वारं वा श्मशानं वा समागम्य द्विजोत्तमः ।
सन्ध्ययोरुभयोस्तद्वदाचान्तोऽप्याचामेत्ततः ॥

व्यासः-

दाने भोजनकाले च संध्ययोरुभयोरपि ।
आचान्तः पुनराचामेज्जपहोमार्चनेषु च ॥

## आचमनापवादमाह

याज्ञवल्क्यः-

मुखजा विप्रुषो मेध्यास्तथाचमनविन्दवः ।

श्मश्रु चास्यगतं दन्तसक्तं त्यक्त्वा ततः शुचिः ॥

-याज्ञवल्क्यस्मृतिः १/१९५ ।

मनुः-

नोच्छिष्टं कुर्वते मुख्या विप्रुषोऽङ्गे पतन्ति याः ।
न श्मश्रूणि गतान्यास्यान्न दन्तान्तरधिष्ठितम् ॥
स्पृशन्ति विन्दवः पादौ य आचामयतः परान् ।
भैमिकैस्ते समा ज्ञेया न तैरपयतो भवेत् ॥
उच्छिष्टेन तु संस्पृष्टो द्रव्यहस्तः कथञ्चन ।
अनिधायैव तद् द्रव्यमाचान्तः शुचितामियात् ॥

-मनुस्मृतिः ५/१४१-१४३ ।

बौधायनः-

दन्तवद्दन्तलग्नेषु दन्तसक्तेषु धारणा ।
अस्थि तेषु च नाचामेत्तेषां संस्थानवच्छुचिः ॥

देवलः-

भोजने दन्तलग्नानि निर्हृत्याचमनं चरेत् ।
दन्तलग्नमसंहार्यं लेपं मन्येत दन्तवत् ॥
न तत्र बहुशः कुर्याद्यत्नमुद्धरणे पुनः ।
भवेदाशौचमत्यर्थं तृणवेधाद्व्रणे कृते ॥

पराशरः-

ताम्बुलेक्षुफले चैव मुक्तस्नेहानुलेपनम् ।
मधुपर्के च सोमे च नोच्छिष्टं मनुरब्रवीत् ॥

-पराशरस्मृतिः ७/३३ ।

वसिष्ठः-

दन्तवद्दन्तलग्नेषु यच्चाप्यन्तर्मुखे भवेत् ।
आचान्तस्यावशिष्टं स्यान्निगिरन्नैव तच्छुचिः ॥

वसिष्ठस्मृतिः ३/४० ।

मनुः-

दन्तवद्दन्तलग्नेषु जिह्वास्पर्शकृते न तु ।
परिच्युतेषु च स्थानान्निगिरन्नैव तच्छुचिः ॥

शातातपः-

दन्तलग्ने फले मूले भुक्तस्नेहावशिष्टके ।
ताम्बुले चेक्षुदण्डे च नोच्छिष्टो भवति द्विजः ॥

गौतमः-

दन्तश्लिष्टेषु दन्तवदन्यत्र जिह्वाभिमर्शनात् ।
यावज्जिह्वायां दन्तेभ्यो भेदेन नोपलभ्यन्त ॥ इत्यर्थः ॥

बृहस्पतिः-

प्रचरन् खान्नपानेषु यदोच्छिष्टमुपस्पृशेत् ।
भूमौ निधाय तद् द्रव्यमाचान्तः प्रचरेत्पुनः ॥
अरण्येऽनुदके रात्रौ चौरव्याघ्रकूले पथि ।
कृत्वा मूत्रपुरीषं च द्रव्यहस्तो न दुष्यति ॥
शौचं तु कुर्यात्प्रथमं पादौ प्रक्षालयेत्ततः ।
उपस्पृश्य तदभ्युक्ष्य गृहीतं शुचितामियात् ॥

## अथ दन्तधावनम्

अत्रिः-

मुखे पर्युषिते नित्यं भवत्यप्रयतो नरः ।
तदार्द्रकाष्ठं शुष्कं वा भक्षयेद्दन्तधावनम् ॥

विष्णुः-

कण्टकिक्षीरवृक्षोत्थं द्वादशाङ्गुलसम्मितम् ।
कनिष्ठाङ्गुलिवत् स्थूलं पूर्वार्द्धकृतकूर्च्चकम् ॥
दन्तधावनमुद्दिष्टं जिह्वालेखनिका तथा ।
सुसूक्ष्मं सूक्ष्मदन्तस्य सम दन्तस्य मध्यमम् ॥
स्थूलं विसमदन्तस्य त्रिविधं दन्तधावनम् ।
द्वादशाङ्गुलिकं विप्रे काष्ठमाहुर्मनीषिणः ॥

क्षत्रविद् शूद्रजातीनां नव षट् चतुरङ्गुलम् ॥

कौर्मे-

मध्याङ्गुलसमस्थूलं द्वादशाङ्गुलसंमितम् ।
सत्वचं दन्तकाष्ठं स्यातदग्रेण तु धावयेत् ॥

व्यासः-

प्रख्याल्य हस्तौ पादौ च मुखञ्च सुसमाहितम् ।
दक्षिणबाहुमुधृत्य कृत्वा जान्वन्तरा ततः ॥
तिक्तं कषायं कटुकं सुगन्धं कण्टकान्वितम् ।
क्षीरिणोवृक्षगुल्मादीन् भक्षयेद् दन्तधावनम् ॥ इति ।

माधवीयेऽङ्गिराः-

भक्षयेत्प्रातरुत्थाय वाग्यतो दन्तधावनम् ।
प्रक्षाल्य भक्षयेत्पूर्वं प्रक्षाल्यैव तु संत्यजेत् ॥
उदङ्मुखः प्राङ्मुखो वा कषायं तिक्तकं तथा ।
प्रातर्भुक्त्वा च ततोर्वाग्भक्षयेद्दन्तधावनम् ॥

[10]मन्त्रो यथा काशीखण्डे-

आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च ।
ब्रह्म प्रज्ञां च मेधां च त्वं नो देहि वनस्पते ॥

अङ्गिराः-

प्रक्षाल्य भक्षयेत्काष्ठं प्रक्षाल्यैव तु संत्यजेत् ।
'आयु'रित्यादि मन्त्रोऽयमुक्तः शाखाभिमन्त्रणे ॥

---

१०. दन्तधावनमन्त्रो यथा-

मुखदुर्गन्धिनाशाय दन्तानां च विशुद्धये ।
ष्ठीवनाय च गात्राणां कुर्वेऽहं दन्तधावनम् ॥

इति चोक्त्वा तेन सर्वदन्तांस्तादृशेनान्येन विह्वां च संशोध्य काष्ठे प्रक्षाल्य भुंक्त्वा दूरं त्यक्त्वा प्रागवद् गण्डूषान्वामभागे निक्षिपेत् । उक्तकाष्ठभावे वर्जितदिने च षोडशगण्डूषैस्तत्ततपत्रैः सुगन्धैर्वा द्रव्यैस्तर्जनीवर्जाङ्गुलिभिर्दन्तादिशोधयेत् इति ।

नागवेदीये-

अन्नाद्याय वृहदज्ञो सामो राजायमागमत् ।
स मे मुखं प्रमार्जन्ति यशसा च भोगेन च ॥

## दन्तधावने वर्ज्यानाह

प्रतिपद्दर्शषष्ठीषु चतुर्दश्यष्टमीषु च ।
नवम्यां भानुवारे च दन्तकाष्ठं विवर्जयेत् ॥

यमोऽपि-

चतुर्दश्यष्टमी दर्शः पूर्णिमा संक्रमो रवेः ।
एषु स्त्री-तैलमांसानि दन्तकाष्ठञ्च वर्जयेत् ॥
श्राद्धे जन्मदिने चैव विवाहेऽजीर्णदोषतः ।
व्रते चैवोपवासे च वर्जयेद्दन्तधावनम् ॥

वसिष्ठः-

शन्यर्कशुक्रवारेषु कुजाहे व्रतवासरे ।
जन्माहे श्राद्धदिवसे दन्तकाष्ठं विवर्जयेत् ॥

यमः- मध्याह्ने स्नानवेलायां भक्षयेद्दन्तधावनम् ।
निराशास्तस्य गच्छन्ति देवताः पितृभिः सह ॥

स्कान्दे-

अभ्यङ्गे चोदधिस्नाने दन्तधावन मैथुने ।
जाते च मरणे चैव तत्कालव्यापिनी तिथिः ॥

व्यासः-

श्राद्धे यज्ञे च नियमान्नाद्यात् प्रोक्तिभर्तृका ।
श्राद्धे कर्त्तुर्निषेधोऽयं न तु भोक्तुः कदाचन ॥
अलाभे दन्तकाष्ठानां निषिद्धायां तथा तिथौ ।
अपां द्वादशगण्डूषैर्विदध्याद्दन्तधावनम् ॥

वृद्धयाज्ञवल्क्यः-

इष्टकालोष्टपाषाणैरितराङ्गुलिभिस्तथा ।

भुक्तं चानामिकाऽङ्गुष्ठौ वर्जयेद्दन्तधावनम् ॥
अङ्गारवालुकापर्णतृणवस्त्रनखादिभिः ।
न दन्तधावनं कुर्याच्छ्रीकामी दूषिते दिने ॥

नृसिंहपुराणे -

प्रतिपद्दर्शषष्ठीषु नवम्यां चैव भारत ।
दन्तानां काष्ठसंयोगो दहत्यासप्तमं कुलम् ॥

## दन्तकाष्ठान्याह

नृसिंहपुराणे -

तस्मात्शुष्कमथार्द्रवां भक्षयेद्दन्तधावनम् ।
खदिरश्च करञ्जश्च कदम्बश्च वटस्तथा ॥
तिन्तिडी वेणुपृष्ठं च आम्रनिम्बौ तथैव च ।
अपामार्गश्च विल्वश्च अर्कश्चौदुम्बरस्तथा ॥
वदरीतिन्दुकास्त्वेते प्रशस्ता दन्तधावने ।
कोविदारः करञ्जश्च कुटजः प्लक्षमालती ॥

आश्वलायनः -

सर्वे कण्ठकिनः पुण्याः क्षीरिणश्च विशेषतः ।

भक्तिचन्द्रोदये -

दन्तकाष्ठं प्रकुर्वीत जिह्वोल्लेखनिकां तथा ।
एकेनैवोभयं कुर्वन्दुःखदारिद्र्यमाप्नुयात् ॥

## अथ प्रातःस्नानसन्ध्या

दक्षः -

अस्नात्वा नाचरेत् कर्म जपहोमादिकिञ्चन ।
लालास्वेदसमाकीर्णः शयनादुत्थितः पुमान् ॥
अत्यन्तमलिनः कायो नवच्छिद्रसमन्वितः ।
स्रवत्वेव दिवा रात्रौ प्रातःस्नानं विशोधनम् ॥

प्रातःस्नानं प्रशंसन्ति दृष्टादृष्टफलं हि तत् ।
सर्वमर्हति शुद्धात्मा प्रातःस्नायी जपादिकम् ॥ इति ।

कूर्मपुराणे-

प्रक्षाल्य दन्तकाष्ठं वै भक्षयित्वा यथाविधि ।
आचम्य प्रयतो नित्यं प्रातःस्नानं समाचरेत् ॥ इति ।

व्यासः-

उषः काले तु सम्प्राप्ते कृत्वा चावश्यकं बुधः ।
स्नायान्नदीषु शुद्धासु कृत्वा शौचं यथाविधि ॥ इति ।

विष्णुः-

स्नातोऽधिकारी भवति दैवे पैत्रे च कर्मणि ।
पवित्राणां तथा जाप्ये दाने च विधि चोदिते ॥
[11]अलक्ष्मीः कालकर्णी च दुःस्वप्नं दुर्विचिन्तितम् ।
अव्मात्रेणाभिषिक्तस्य नश्यन्तीति च धारणा ॥
याम्यं हि यातनादुःखं प्रातःस्नायी न पश्यति ।
नित्यस्नानेन पूयन्ते येऽपि पापकृतो जनाः ॥

व्यासः-

प्रातः संक्षेपतः स्नानं होमार्थं तद् विधीयते ।
मृन्मात्र विधिनिष्पाद्यं मध्याह्ने तत्सुविस्तरम् ॥

दक्षः-

अज्ञानाद्यदि वा मोहाद्रात्रौ दुश्चरितं कृतम् ।
प्रातःस्नानेन तत्सर्वं शोधयन्ति द्विजातयः ॥ इति ।

अत्रैव नदीलक्षणम्-

धनुः सहस्राण्यष्टौ तु गतिर्यास्यां न विद्यते ।
न सा नदीशब्दरुहा गर्तास्ते परिकीर्त्तिताः ॥

धनुश्चतुर्हस्तमिति वाचस्पतिः ।

---

११. अलक्ष्मीर्लक्ष्म्या अग्रजा । कालकर्णी चतुषष्ठियोगिन्यन्तर्गताऽष्टत्रिंशत् संख्यका योगिनी ।

महानद्यश्चोक्ता ब्राह्मे-

गोदावरी भीमरथी तुङ्गभद्रा च वेणिका ।
तापी पयोष्णी विन्ध्यस्य दक्षिणे तु प्रकीर्त्तिताः ॥
भागीरथी नर्मदा च यमुना च सरस्वती ।
विशोका च वितस्ता च विन्ध्यस्योत्तरतः स्थिताः ॥

चन्द्रिकायां वामनपुराणे-

गोदावरी भीमरथी कृष्णावेणी सरस्वती ।
तुङ्गभद्रा सुप्रयोगासत्याकावेरिरेव च ॥
दुग्धदा नलिनी रेवा वारिसीता कलस्वना ।
एता अपि महानद्यः सह्यमूलाद्विनिर्गताः ॥

तथा छान्दोग्यपरिशिष्टे तत्कालमाह-

प्रातः स्नायादरुणकिरण प्रास्तां प्राचीमवलोक्य स्नायादिति ।

## अत्रोदयात्प्राक् प्रातःस्नानविधानम्

सूर्योदयं विना नैव स्नानदानादिकाः क्रिया ।

श्राद्धचन्द्रिकायाम्-

चतस्रो घटिकाः प्रातररुणोदय उच्यते ।
यतीनां स्नानकालस्तु गङ्गाम्बुसदृशः स्मृतः ॥

बौधायनः-

सप्ताहं प्रातरस्नायी सन्ध्याहीनस्त्रिभिर्दिनैः ।
द्वादशाहमनग्निः स्याद् द्विजः शूद्रत्वमाप्नुयात् ॥
तद्दोषपरिहारार्थं भानुवारेऽपि शस्यते ।

जाबालिः-

आतुरस्तु शिरो मुक्त्वा गात्र प्रक्षालनन्तथा ।
तदशक्तौ सर्वगात्रमार्जनं वाससा चरेत् ॥
अशिरस्कं भवेत्स्नानं स्नानाशक्तौ च कर्मिणाम् ।
आर्द्रेण वाससा वापि मार्जनं दैहिकं विदुः ॥

आचाररत्ने स्मृत्यर्थसारे-

यत्र पुंसः सचैलं स्यात्स्नानं तत्र सुवासिनी ।
कुर्वीते वा शिरःस्नानं शिरोरोगी जटी तथा ॥ इति ।

स्मृतिसारे-

चक्षुरोगी शिरो रोगी कर्णरोगी कफाधिकः ।
कण्ठस्नानं प्रकुर्वीत शिरःस्नानसमं हि तत् ॥

तथा- शिरो रोगी जटी चैव स्नायादशिरसं तथा ।
आपो हि ष्ठादिभिर्मन्त्रैर्मार्जयेन्मूंध्नि वै जलम् ॥

योगी याज्ञवल्क्यः-

असामर्थ्याच्छरीरस्य कालशक्त्याथपेक्षया ।
मन्त्रस्यानादितः सप्त केचिदिच्छन्ति सूरयः ॥
गात्रं भौमं तथाऽऽग्नेयं वायव्यं दिव्यमेव च ।
वारुणं मानसं चैव सप्त स्नानान्यनुक्रमात् ॥
आपो हि ष्ठादिभिर्मन्त्रं मृदालम्भश्च पार्थिवम् ।
आग्नेयं भस्मना स्नानं वायव्यं गोरजः स्मृतम् ॥
यत्तु सातपवर्षेण स्नानं तद्दिव्यमुच्यते ।
अवगाहो वारुणं स्यान्मानसं विष्णुचिन्तनम् ॥
सप्तस्नानं यथोद्दिष्टं मन्त्रस्नानं क्रमेण तु ।
कालाद्देशादसामर्थ्यात्सर्वं तु धार्मिकं स्मृतम् ॥
मृत्तिकां तिलकं कुर्यास्नात्वा हुत्वा च भस्मना ॥
दुष्टदोष विधातीर्थं चाण्डालाद्यादिदर्शने ॥

ऊर्ध्वपुण्ड्र उक्तो विष्णुस्मृतौ-

याग दानं जपो होमः स्वाध्यायः पितृतर्पणम् ।
भस्मी भवति तत्सर्वमूर्ध्वपुण्ड्रं विना कृतम् ॥

त्रिपुण्ड्र उक्तो भविष्यपुराणे-

सितेन भस्मना कुर्यात्रिसंध्यं च त्रिपुण्ड्रकम् ।
सर्वपापविनिर्मुक्तः शिवेन सह मोदते ॥

सत्यं शौचं जपो होमस्तीर्थं देवादिसेवनम् ।
तस्य व्यर्थमिदं सर्वं यस्त्रिपुण्ड्रं न धारयेत् ॥

ब्राह्मे-

ऊर्ध्वं पुण्ड्रं मृदा कुर्यात् त्रिपुण्ड्रं भस्मना सदा ।
तिलकं वै द्विजः कुर्याच्चन्दनेन यदृच्छया ॥

कात्यायनोऽपि-

ऊर्ध्वपुण्ड्रं मृदा कुर्याद् भस्मना तु त्रिपुण्ड्रकम् ।
उभयं चन्दनेनैव अभ्यङ्गोत्सवरात्रिषु ॥

## स्नानप्रकारमाह

शङ्खः-

स्नानन्तु द्विविधं प्रोक्तं गौण-मुख्य प्रभेदतः ।
तयोस्तु वारुणं मुख्यं तत्पुनः षड्विधं भवेत् ॥
नित्यं नैमित्तिकं काम्यं क्रियाऽङ्गं मलकर्षणम् ।
क्रियास्नानं तथा षष्ठं षोढा स्नानं प्रकीर्त्तितम् ॥ इति ।

एतेषां लक्षणमाह शङ्खः-

अस्नातश्च पुमान्नार्हो जपाग्निहवनादिषु ।
प्रातःस्नानं तदर्थन्तु नित्यस्नानं प्रकीर्त्तितम् ॥
चाण्डालशव-यूपांश्च[१२] स्पृष्ट्वाऽस्नातां रजश्वलाम् ।
स्नानार्हस्तु यदाप्नोति स्नानं नैमित्तिकं हि तत् ॥
पुण्यस्नानादिकं यत्तु दैवज्ञा-विधि-चोदितम् ।
तद्धि काम्यं समुद्दिष्टं नाकामस्तत् प्रयोजयेत् ॥
जप्तुकामः [१३]पवित्राणि अर्च्चिव्यन् देवताः पितृन् ।
स्नानं समाचरेद् यस्तु क्रियाङ्गं तत्प्रकीर्त्तितम् ॥

---

१२. यज्ञीययूपस्पर्शोऽपि निषिद्धः । स च वहिः कर्मणि ऊर्ध्वमेव मन्तव्यः । गोभिलेनत्वत्र होमादिकं विहितम् ।

१३. पवित्राणि मन्त्रान् ।

मलापकर्षणं नाम स्नानमभ्यङ्गपूर्वकम् ।
मलापकर्षणार्थाच्च प्रवृत्तिस्तस्य कीर्त्तिता ॥
सरःसु देवखातेषु तीर्थेषु च नदीषु च ।
क्रियास्नानं समुदिष्टं स्नानं तत्र मता क्रिया ॥

आपस्तम्बः-

नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमिष्यते ।
तर्पणन्तु भवेत्तत्र अङ्गत्वेन तु निश्चितम् ।

यमः-

नित्यं नैमित्तिकं काम्यं क्रियाङ्गं मलकर्षणम् ।
तीर्थाभावे तु कर्त्तव्यमुष्णोदकपरोदकैः ॥ इति ।

## नित्यस्नानम्

यमः-

पादौ प्रक्षालयेत्पूर्वं मुखं यज्ञोपवीतकम् ।
द्विराचम्य कराभ्यां च दर्भान्धृत्वा शिखां स्पृशेत् ॥
प्राणायामं ततः कुर्यात्कालज्ञानं यथोदितम् ।
आपो हि ष्ठेति मन्त्रेण इमं मे गङ्ग इत्यर्थ ॥
अतो देवेतिसूक्तेन सावित्र्या चाभिमन्त्रयेत् ।
शीतोदके तु दर्भैश्च पश्चादुष्णोदकं क्षिपेत् ॥

आश्वलायनः-

स्नानमध्ये त्वाचमनं तर्पणं वस्त्रपीडनम् ।
करपात्रगतं तोयं गृहे चैतानि वर्जयेत् ॥

बौधायनः-

गृहस्नाने न तु प्रोक्तं मार्जने तर्पणादिकम् ।
नान्तरा आचमनं कुर्यात्पश्चादाचम्य शुध्यति ॥

कौर्मे-

नित्यमभ्युदयात्पूर्वं स्नातव्यं शुद्धिमिच्छता ।

एष साधारणो धर्मश्चतुर्वर्णस्य कीर्त्तितः ।।
स्त्रीभिः शूद्रैश्च कर्त्तव्यं मन्त्रवर्जं विगाहनम् ।

कात्यायनः-

यथाऽहनि तथा प्रातर्नित्यं स्नायादनातुरः ।
दन्तान् प्रक्षाल्य नद्यादौ गृहे चेत्तदमन्त्रवत् ।।
अल्पत्वाद्धोमकालस्य बहुत्वात् स्नानकर्मणः ।
प्रातर्न तनुयात् स्नानं होमलोपो विगर्हितः ।।

रत्नमालायाम्-

आचम्य प्रयतः पूर्वं स्नानं प्रातः समाचरेत् ।
स्नात्वा सन्तर्पयेद्विद्वान् ऋषीन् पितृगणांस्तथा ।।
आचम्य प्रयतो नित्यं पुनराचम्य वाग्यतः ।

मार्कण्डेयपुराणे-

शिरः स्नातस्तु कुर्वीत दैवं पैत्र्यमथापि वा ।

योगियाज्ञवल्क्यः-

उषस्युषसि यत् स्नानं सन्ध्यायामुदिते रवौ ।
प्राजापत्येन तत्तुल्यं महापातकनाशनम् ।।

कूर्मपुराणे-

ततो मध्याह्नसमये स्नानार्थं मृदमाहरेत् ।
[१४]पुष्पाक्षतान् कुशान् तिलान् गोमयं शुद्धमेव च ।।
नदीषु देवखातेषु तडागेषु सरःसु च ।
स्नानं समाचरेन्नित्यं [१५]गर्त्तप्रश्रवणेषु च ।।
[१६]परकीयनिपानेषु न स्नायाद्वै कदाचन ।
पञ्चपिण्डान् समुद्धृत्य स्नायाद्वाऽसम्भवे पुनः ।। इति ।

---

१४. अक्षता यवाः । 'अक्षतास्तु यवाः प्रोक्ताः'- इति स्मरणात् । यवानामासादनञ्च तर्पणार्थमिति बोध्यम् । एवं तिलानामपि ।

१५. गर्त्तास्तु- धनुः सहस्राण्यष्टौ च गतिर्यासां न विद्यते ।
न ता नदीशब्दवहा गर्त्तास्ते परिकीर्त्तिताः ।। इत्युक्तलक्षणाः ।

# अथ नैमित्तिकस्नानम्

गोभिलः-

निमित्तादथ जातं तु स्नानं नैमित्तिकं स्मृतम् ।

अत्रिः-

तुष्णीमेवावगाहेत यदा स्यादशुचिर्नरः ।
आचम्य प्रयतः पश्चात् स्नानं विधिवदाचरेत् ॥

आपस्तम्बः-

अस्पृश्यस्पर्शने वान्ते अश्रुपाते क्षुरे भगे ।
स्नानं नैमित्तिकं कार्यं दैवपित्र्यविवर्जितम् ॥

मनुः-

दिवाकीर्त्तिमुदक्यां च पतितं सूतिकां तथा ।
शवं तत्स्पृष्टिनं चैव स्पृष्ट्वा स्नानेन शुध्यति ॥

-मनुस्मृतिः ५/८५ ।

पारिजाते-

शवं दृष्ट्वा शवं स्पृष्ट्वा गत्वा शवगृहं तथा ।
शवानुगमनं कृत्वा सवासा जलमाविशेत् ॥

अङ्गिराः-

शवस्पृशमथोदक्यां सूतिकां पतितं तथा ।
स्पृष्ट्वा स्नानेन शुद्धः स्यात् सचैलेन न संशयः ॥

कूर्मपुराणे-

शूद्रचण्डालसूतकसंस्पृष्टं संस्पृशेद् यदि ।
प्रमादात्तु द्विराचम्य जपं कुर्यात् समाहितः ॥
तत् स्पृष्टि स्पृष्टिनं स्पृष्ट्वा बुद्धिपूर्वं द्विजोत्तमः ।
आचमेत विशुद्ध्यर्थं प्राह देवः पितामहः ॥

---

१६. परकीयत्वं परस्वामिकत्वं तेन परस्वामि न निपातने उत्सर्गात्परं न पिण्डोद्धारः इत्येके निबन्धारः । परकीयत्वं परकृतत्वं तेनोत्सर्गात् परमपि पिण्डोद्धारः। इत्यमरः ।

याज्ञवल्क्योऽपि-

उदक्या सूचिभिः स्नायात् संस्पृष्टः तैरुपस्पृशेत् ।
अव्लिङ्गानि जपेच्चैव गायत्रीं मनसा सकृत् ॥

याज्ञवल्क्यस्मृतिः ३/३० ।

निमित्तान्याह मनुः-

अजीर्णेऽभ्युदिते वान्ते श्मश्रुकर्मणि मैथुने ।
दुःस्वप्ने दुर्जनस्पर्शे स्नानमात्रं विधीयते ॥
शुना चैव श्वपाकेन मृतनिर्हारकेण वा ।
स्पृष्टमात्रस्तु कुर्वीत सचैलं प्लावनं जले ॥

संवर्त्तः-

तत्स्पृष्टिनं स्पृशेयस्तु स्नानं तस्य विधीयते ।
अर्ध्वमाचमनं प्रोक्तं द्रव्याणां प्रोक्षणं तथा ॥

विष्णुः-

स्नानार्हो यो निमित्तेन कृत्वा तोयावगाहनम् ।
आचम्य प्रयतः पश्चात् स्नानं विधिवदाचरेत् ॥

गार्ग्योऽपि-

कुर्यानैमित्तिकं स्नानं शीताद्भिः काम्यमेव च ।
नित्यं यादृच्छिकं चैव यथारुचि समाचरेत् ॥

## अथ काम्यस्नानम्

शङ्खः-

पुष्यस्नानादिकं यत्तु दैवज्ञविधिचोदितम् ।
तद्धि काम्यं समुद्दिष्टं नाकामस्तत्प्रयोजयेत् ॥

पुलस्त्यः-

पुष्ये च जन्मनक्षत्रे व्यतीपाते च वैधृतो ।
अमायां च नदीस्नानं पुनात्यासप्तमं कुलम् ॥
चैत्रकृष्णचतुर्दश्यां यः स्नायाच्छिवसन्निधौ ।

न प्रेतत्वमवाप्नोति गङ्गायां च विशेषतः ॥
शिवलिङ्गसमीपे तु मुच्यते सर्वकिल्विषैः ।
ज्येष्ठे मासि सिते पक्षे दशमी हस्तसंयुता ॥
दशजन्माघहा गङ्गा तेन पापहरा स्मृता ॥

विष्णुः-

सूर्यग्रहणतुल्या तु शुक्ला माघस्य सप्तमी ।
अरुणोदयवेलायां तस्यां स्नानं महाफलम् ॥
पुनर्वसुबुधोपेता चैत्रमाससिताष्टमी ।
स्रोतस्तु विधिवत् स्नात्वा वाजपेयफलं लभेत् ॥

मत्स्यपुराणे-

आषाढादि चतुर्मासं प्रातःस्नायी भवेन्नरः ।
विप्रेभ्यो भोजनं दत्वा कार्त्तिक्यां गोप्रदो भवेत् ॥
स वैष्णवपदं याति विष्णुव्रतमिदं स्मृतम् ॥

यमोऽपि-

कार्त्तिक्यां पुष्करे स्नातः सर्वपापैः प्रमुच्यते ।
माघ्यां स्नातः प्रयागे तु मुच्यते सर्वकिल्विषैः ॥
ज्येष्ठे मासि सिते पक्षे दशम्यां हस्तसंयुते ।
दशजन्माघहा गङ्गा तेन पापहरा स्मृता ॥

आदित्यपुराणे-

कार्त्तिकं सकलं मासं नित्यस्नायी जितेन्द्रीयः ।
जपन् हविष्यभुक् क्लान्तः सर्वपापैः प्रमुच्यते ॥
तुलामकरमेषेषु प्रातः स्नानं सदा भवेत् ।
हविष्यं ब्रह्मचर्यं च महापातकनाशनम् ॥

मार्कण्डेयोऽपि-

सर्वकालं तिलैः स्नानं पुण्यं व्यासोऽब्रवीन्मुनिः ।
तुल्यत्यामलकैर्विष्णुरेकादश्यां विशेषतः ॥
श्रीकामः सर्वदा स्नानं कुर्वीतामलकैर्न्नरः ।

सप्तमीं नवमीञ्चैव पर्वकालञ्च वर्ज्जयेत् ॥

विष्णुः-

बालश्च तरुणा वृद्धा नरनारी नपुंसकाः ।
स्नात्वा माघे शुभे तीर्थे प्राप्नुवन्तीस्फितं फलम् ॥
माघे मास्युषसि स्नात्वा विष्णुलोकं स गच्छति ॥

## क्रियाङ्गस्नानम्

शङ्खः-

जप्तुकामः पवित्राणि अर्च्चिष्यन् देवताः पितृन् ।
स्नानं समाचरेत् यस्तु क्रियाङ्गं तत्प्रकीर्त्तितम् ॥

पुराणे-

धर्मक्रियां कर्त्तुमनाः पूर्वं स्नानं समाचरेत् ।
क्रियाङ्गं तत्समुद्दिष्टं स्नानं वेदमयै द्विजः ॥

## मलापकर्षणस्नानम्

शङ्खः-

मलापकर्षणं नाम स्नानमभ्यङ्ग[१७]पूर्वकम् ।
मलापकर्षणार्थाय प्रवृत्तिस्तस्य कीर्त्तिता ॥

मनुः-

पक्षादौ च रवौ षष्ठ्यां रिक्तायाञ्च तथा तिथौ ।
तैलेनाभ्यज्यमानस्तु धनायुभ्यां विहीयते ॥

बौधायनः-

नन्दासु चैव रिक्तासु पूर्णासु च जयासु च ।
द्वादश्यां चैव सप्तम्यां व्यतीपाते स वै धृतौ ॥
रविसंक्रमणे चैव नाभ्यङ्गस्नानमाचरेत् ॥

---

१७. अभ्यङ्गं च- मूर्द्ध्नि दत्तं यदा तैलं भवेत् सर्वाङ्गसङ्गतम् ।
स्रोतोभिस्तर्पयेद्वाहु अभ्यङ्गं स उदाहृतः ॥

यमोऽपि-

घृतं च सार्षपं तैलं यत्तैलं पुष्पवासितम् ।
न दोषः पक्वतैलेषु स्नानाभ्यङ्गेषु नित्यशः ॥

गर्गोऽपि-

पञ्चदश्यां चतुर्दश्यामष्टम्यां रविसंक्रमे ।
द्वादश्यां सप्तमी षष्ठ्योः तैलस्पर्शं विवर्जयेत् ॥

बृहस्पतिः-

संक्रान्त्यां रविवारे च षष्ठ्यां भैमदिने तथा ।
द्रव्यान्तरयुतं तैलं न दुष्यति कदाचन ॥

ज्योतिःशास्त्रे-

सन्तापः कान्तिरल्पायुर्धनं निर्धनता तथा ।
अनारोग्यं सर्वकामाः अभ्यङ्गाद् भाष्करादिषु ॥

अभ्यङ्गलक्षणमायुर्वेदे-

मूर्ध्नि दत्तं यदा तैलं भवेत् सर्वाङ्गसङ्गतम् ।
स्रोतानि तर्पयेद्वाहूनभ्यङ्गः स उदाहृतः ॥

## क्रियास्नानम्

शङ्खः-

सरःसु देवखातेषु तीर्थेषु च नदीषु च ।
क्रियास्नानं समुद्दिष्टं स्नानं तत्र क्रिया मता ॥

तथा-

यत्तु तीर्थादिषु स्नानं क्रियास्नानं प्रकीर्त्तितम् ।
स्नानमेव फलं यत्तु क्रियास्नानं प्रकीर्त्तितम् ॥

मार्कण्डेयोऽपि-

पुराणानां नरेन्द्राणामृषीणाञ्च महात्मनाम् ।
स्नानं कूप तडागेषु देवतानां समाचरेत् ॥
भूमिष्ठमुद्धृतात्पुण्यं ततः प्रस्रवणोदकम् ।

ततोऽपि सारसं पुण्यं तस्मान्नादेयमुच्यते ।
तीर्थतोयं ततः पुण्यं ततो गाङ्गस्तु सर्वतः ॥

## अथ सन्ध्याविधिः

दक्षः- अहोरात्रस्य यः सन्धिः सूर्यनक्षत्रवर्जितः ।
सा तु सन्ध्या समाख्याता मुनिभिस्तत्त्वदर्शिभिः ॥

व्यासः-

उपास्ते सन्धिवेलायां निशायां दिवसस्य च ।
तामेव सन्ध्यां तस्मात्तु प्रवदन्ति मनीषिणः ॥

योगियाज्ञवल्क्यः-

सन्धौ सन्ध्यामुपासीत नास्तगे नोद्गते रवौ ।

हारीतः-

पूर्वां सन्ध्यां सनक्षत्रामुपक्रम्य यथाविधि ।
गायत्रीमभ्यसेद् विद्वान् यावदादित्यदर्शनम् ॥

पुलस्त्यः-

सन्ध्यामिष्टिं च होमं च यावज्जीवं समाचरेत् ।
न त्यजेत्सूतके वाऽपि त्यजन्गच्छेदधोगतिम् ॥

षट्त्रिंशन्मते-

होमे भोजनकाले तु सन्ध्ययोरुभयोरपि ।
आचान्तः पुनराचामेज्जपहोमार्चनादिषु ॥

मनुः-

पूर्वां सन्ध्या जपंस्तिष्ठेत्सावित्रीमार्कदर्शनात् ।
पश्चिमां तु समासीत सम्यगृक्षविभावनात् ॥

-मनुस्मृतिः २/१०२ ।

मरिचिः-

सन्ध्या येन न विज्ञाता सन्ध्या येनानुपासिता ।
जीवमानो भवेच्छूद्रो मृतः श्वा चाभिजायते ॥

दक्षः-

सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ।
यदन्यत्कुरुते कर्म न तस्य फलभाग् भवेत् ॥

बौद्धायनः-

अनागतां तु यः पूर्वां नातिक्रान्तां तु पश्चिमाम् ।
सन्ध्यां नोपासते विप्राः कथन्ते ब्राह्मणाः स्मृताः ॥
सन्ध्या त्रयं तु कर्त्तव्यं द्विजेनात्मविदा सदा ।

अत्रिः-

सन्ध्यात्रयं तु कर्त्तव्यं द्विजेनात्मविदा सदा ।
उभे सन्ध्ये तु कर्त्तव्ये ब्राह्मणैस्तु गृहेष्वपि ॥

शातातपः-

प्रातः सन्ध्या सनक्षत्रा मध्याह्ना मध्यगे रवौ ।
पश्चिमा तु समाख्याता रविनक्षत्रवर्जिता ॥

दक्षः-

रात्र्यन्तयामनाडी द्वे सन्ध्याकालोऽयमुच्यते ।
दर्शनार्द्रविरेखायास्तदन्तो मुनिभिः स्मृतः ।
अध्यर्धयामादासायं सन्ध्या माध्याह्निकीष्यते ॥

धर्मसारे-

उत्तमा तारकोपेता मध्यमा लुप्ततारका ।
अधमा सूर्यसहिता प्रातः सन्ध्या त्रिधा मता ॥
उत्तमा सूर्यसहिता मध्यमा लुप्ततारका ।
कनिष्ठा तारकोपेता सायं सन्ध्या त्रिधा मता ॥

अग्निस्मृतौ-

सन्ध्याकालः प्रागुदयाद्विप्रस्य द्विमुहूर्त्तकः ।
क्षत्रियस्य तदर्द्धं स्यात्तदर्धं स्याद्विशोऽप्युत ।
तथैवास्तमिते तेषां वैश्यादीनामयं क्रमः ॥

स्मृतिसंग्रहे-

मध्याह्नस्नानादूर्ध्वं यः कालस्त्वव्यवधानतः ।
तत्र मध्याह्नसन्ध्या स्यादूर्ध्वं गौणः स्मृतो बुधैः ॥

कालभेदेन देवताया नामादि भेदमाह-

व्यासः -

गायत्री नाम पूर्वाह्ने सावित्री मध्यमे दिने ।
सरस्वती च सायाह्ने सैव सन्ध्या त्रिधा स्मृता ॥
प्रतिग्रहादन्नदोषात् पातकादुपपातकात् ।
गायत्री प्रोच्यते तस्माद् गायन्तं त्रायते यतः ॥
सवितृद्योतनात् सैव सावित्री परिकीर्त्तिता ।
जगतः प्रसवित्री वा वाग्रूपत्वात् सरस्वती ॥ इति ।

वर्णभेदः स्मृत्यन्तरेऽभिहितः-

गायत्री तु भवेद्रक्ता सावित्री शुक्लवर्णिका ।
सरस्वती तथा कृष्णा उपास्या वर्णभेदतः ॥
गायत्री ब्रह्मरूपा तु सावित्री रुद्ररूपिणी ।
सरस्वती विष्णुरूपा उपास्या रूपभेदतः ॥

व्यासः-

गृहे त्वेकगुणा सन्ध्या गोष्ठे दशगुणा स्मृता ।
शतसाहस्रिका नद्यामनन्ता विष्णुसन्निधौ ॥
बहिः सन्ध्या दशगुणा गर्त्तप्रस्रवणेषु च ।
ख्याते तीर्थे शतगुणा ह्यनन्ता जाह्नवी जले ॥

शातातपः-

अनृतं मद्यगन्धं च दिवामैथुनमेव च ।
पुनाति वृषलस्यान्न बहिः सन्ध्या ह्युपासिता ॥

तत्रैव-

गृहेषु प्राकृती सन्ध्या गोष्ठे शतगुणा स्मृता ।
नदीषु शतसाहस्रा अनन्ता शिवसन्निधौ ॥

## सन्ध्याप्रसंशा

यमः-

विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनम् ॥
यदह्ना कुरुते पापं कर्मणा मनसा गिरा ।
आसीनः पश्चिमां सन्ध्यां प्राणायामैस्तु हन्ति तत् ॥
यद् रात्र्या कुरुते पापं कर्मणा मनसा गिरा ।
पूर्वसन्ध्यामुपासीनः प्राणायामैर्व्यपोहति ॥
ऋषयः दीर्घसन्ध्यत्वाद् दीर्घमायुरवाप्नुयुः ।
प्रज्ञां यशश्च कीर्त्तिश्च ब्रह्मवर्चसमेव च ॥ इति ।

बौधायनः-

यदुपस्थकृतं पापं पद्भ्यां वै यत्कृतं भवेत् ।
बाहुभ्यां मनसा चैव वाचा वाथ कृतं भवेत् ॥
सायं सन्ध्यामुस्थाय तेन तस्मात्प्रमुच्यते ॥

## अकरणे प्रत्यवायः

विष्णुपुराणे-

उपतिष्ठन्ति वै सन्ध्यां ये न पूर्वां न पश्चिमाम् ।
व्रजन्ति ते दुभरात्मानस्तामिश्रं नरकं नृपः ॥

कूर्मपुराणे-

योऽन्यत्र कुरुते यत्नं धर्मकार्ये द्विजोत्तमः ।
विहाय सन्ध्याप्रणतिं स याति नरकायुतम् ॥

याज्ञवल्क्यः-

अनार्त्तश्चोत्सृजेद्यस्तु सविप्रः शूद्रसम्मितः ।
प्रायश्चित्ती भवेच्चैव लोके भवति निन्दितः ॥

अत्रिः-

नोपतिष्ठन्ति ये सन्ध्यां स्वस्थाऽवस्थास्तु च क्वचित् ।
हिंसन्ति वै सदा पापा भगवन्तं दिवाकरम् ॥

विष्णुपुराणे-

सर्वकालमुपस्थानं सन्ध्यायाः पार्थिवेष्यते ।
अन्यत्र सूतिकाशौच-विभ्रमातुर-भीतितः ॥

सूतकादौ सत्यपि सामर्थ्ये सन्ध्योपासनं न कार्यमित्याह ।

मरीचिः-

सूतके कर्मणां त्यागः सन्ध्यादीनां विधीयते ।

पुनस्तेनोक्तम्-

सन्ध्यामिष्टिश्च होमश्च यावज्जीवं समाचरेत् ।
न त्यजेत् सूतके वाऽपि त्यजन्गच्छत्यधोगतिम् ॥

तन्मानसिकसन्ध्याऽभिप्रायम् । यतस्तेनैवोक्तम्-

सूतके मृतके चैव सन्ध्याकर्म न तु त्यजेत् ।
मनसोच्चारयेन्मत्रान् प्राणायाममृते द्विजः ॥
एतद्विदित्वा यः सन्ध्यामुपास्ते संशितव्रतः ।
दीर्घमायुः स विन्देत सर्वपापैः प्रमुच्यते ॥

## उद्धृतजले समन्त्रकस्नानम्

व्यासः-

शान्तास्त्यापो निषेव्याष्णी मन्त्रसम्भार संभृता ।
गेहेऽपि सफलस्नानं तज्जलं सफलं स्मृतम् ॥

मन्त्रसम्भारसम्भृता इति । नमो नारायणायेति मन्त्रमुच्चार्य जलमभिमन्त्रितं स्नानं समाचरेदिति । स्नानापनेयाशौचे अवगाहानन्तरं स्नानमाह-

यागियाज्ञवल्क्यः-

तुष्णीमेवावगाहेत यदास्यादशुचि नरः ।
आचम्य प्रयतः पश्चात् स्नानविधिवदाचरेत् ॥

हारीतः-

नातुरो न भुक्त्वा नाजीर्णे न बहु वाशा नग्नो नाश्नत् ।

नालंकृतो नाज्ञातेन जले न जलेनाशुचौ न ॥
प्रभृतजललाभे मल्पजलेन चत्वरेनोपभ्यन्तरे ।
न सन्ध्यायां न निशायां स्नायादिति ॥

न कूले -न गर्त्ते इत्यर्थः ।

राहुदर्शनसंक्रान्ति विवाहात्ययवृद्धिषु ।
स्नानदानादिकं कुर्यान्निशिकाम्य व्रतेषु च ।
अत्ययो मृतकं वृद्धिः पुत्रजन्मादिकारणात् ॥

पुनश्च-

विवाह-व्रत-संक्रान्ति प्रतिष्ठा ऋतुजन्मसु ।
तथा परागपातादौ स्नाने दाने निशा शुभा ॥

नास्तमिति, दृष्टार्थस्नाननिषेधपरम् । समुद्रधृक् करधृत् ।

गोभिलभाष्ये-

इक्षुरापः पयश्चैव ताम्बुलं फलमौषधिम् ।
भक्षयित्वा तु कर्त्तव्याः स्नानदानादिकाः क्रियाः ॥

रोगयुक्तनामौषधभक्षणमेतत् ।

भविष्योत्तरे-

स्नातस्तु वरुणस्तेजो वायुरग्निः श्रियं हरेत् ।

गोभिलः-

एकवस्त्रेण यत्स्नानं शिखावद्धेन तेन हि ।
स्नान न लभते शुद्धं श्रीया च परिहीयते ॥

अतएव-

स्नानं तर्पणपर्यन्तं कुर्यादेकेन वाससा ।

इति यदि सम्बलम् । तत्रैकेन एक जातीयेन इति वाचस्पतिमिश्राः । येन वाससा स्नानं कृतं तेनैव वाससा तर्पणमित्याचार्य चूडामणिः ।

अधौतं कारुधौतं च परैर्यद्धौतमेव च ।
कौशेयं मलिनं वस्त्रं कौपिनं च विवर्जयेत् ॥

## अत्रापवादमाहः

प्रचेताः-

पुत्रमित्रकलत्रैण स्वजातिबान्धवेन च ।
दासवर्गेण यद्धौतं तत्पवित्रमिति स्थितिः ॥

सत्यतपाः-

प्रागग्रमुदगग्रं वा धौतवस्त्रं प्रसारयेत् ।
पश्चिमाग्रं दक्षिणाग्रं पुनः प्रक्षालनात्सुचिः ॥

भृगुः-

विकच्छोनुत्तरीयश्च नग्नश्चावस्त्र एव च ।
श्रौत्रं स्मार्त्तं तथा कर्म न कश्चिच्चिन्तयेदपि ॥

विकच्छ परिपालसंमतकच्छः ।

स्कान्दे-

स्नानं दानं जपो होमः स्वाधायः पितृतर्पणम् ।
वृथा तस्य महायज्ञा नीलीवासो विभर्त्ति यः ॥
स तु सप्ततिः संख्यतान् नरके वसति ध्रुवम् ।
एतेन सर्वकर्माणि शुक्लवस्त्रधारो भवेदित्यर्थः ॥

भविष्ये-

नीलरक्तं यदा वस्त्रं विप्रस्त्वङ्गेषु धारयेत् ।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुद्धयति ॥

शङ्खः-

नीलरक्तं परिधाय भुक्त्वा स्नानार्हकस्तथा ।
त्रिरात्रं तु व्रतं कुर्याच्छित्वा गुल्मलतास्तथा ॥

स्मृत्यन्तरे-

नग्नः काषायवासः स्यात् नग्नः कौपीनवानपि ।
नग्नो द्विगुणवासः स्यान्नग्नश्चार्द्धपटस्तथा ॥
अकच्छोऽनुत्तरीयश्च नग्नो वर्ज्यो विवस्त्रवत् ।

ब्रह्माण्डे -

पितृदेवार्च्चने होमे कुर्यात्कार्पासमंशुकम् ।
क्षोमं वा वल्कलं वापि न कौशेयं कदाचन ॥
नोत्तरीयमधः कुर्याद्रात्रिवासो दिने तथा ।
न रात्रिवाससा स्नायाद् गात्रं नोन्मार्जयेत्तथा ॥

नरसिंहे -

न रक्तमुल्वतां वासो न नीलं च प्रशस्यते ।
मलाक्तं च गन्धहीनञ्च वर्जयेदम्बरं बुधः ॥

विष्णुधर्मोत्तरे -

उपानहं नान्यधृतं ब्रह्मसूत्रं च धारयेत् ।
न जीर्ण मलवद्वासो विभवे सति वर्जयेत् ॥

काशीखण्डे -

नीलीरक्तं तु यद्वस्त्रं दूरतस्तद्विवर्जयेत् ।
स्त्रीणां क्रीडार्थसंयोगे शय़नीयेन दुष्यति ॥

अङ्गिराः -

मृते भर्त्तरि या नारी नीलीवस्त्रं प्रधारयेत् ।
भर्त्ता तु नरकं याति सा नारी तदनन्तरम् ॥

## परिधानप्रकारमाह

श्रुतिः -

वामपृष्ठे तथा नाभौ काक्षत्रयमुदाहृतम् ।

तथा च स्मृतिः -

संक्रान्त्यां पक्षयोरन्ते द्वादश्यां श्राद्धवासरे ।
न पिडयेत् स्नानवस्त्रं नापिक्षारेण योजयेत् ॥

वसिष्ठः -

जलमध्ये तु यः कश्चिद् द्विजोऽपि ज्ञानदुर्वलः ।
निष्पीडयति तद्वस्त्रं स्नानं तस्य वृथा भवेत् ॥

वृद्धमनुः-

निष्पिड्य स्नानवस्त्रं तु पश्चात्सन्ध्यां समाचरेत् ।
अन्यथा कुरुते यस्तु स्नानं तस्याफलं भवेत् ॥

मनुः-

मनुष्यतर्पणे चैव स्नानवस्त्रनिष्पीडने ।
निवीनी च भवेद्विप्रस्तथा मूत्रपुरीषयोः ॥

यागियाज्ञवल्क्यः-

स्नात्वैवं वाससी धौते अक्लिने परिधाय च ।
प्रक्षाल्योरुमृदाद्भिश्च हस्तौ प्रक्षालयेत्तथा ॥
निष्पीडयति यः पूर्वं स्नानवस्त्रं तु तर्पणात् ।
निराशास्तस्य गच्छन्ति देवाः पितृगणैः सह ॥

भृगुः-

ब्राह्मणस्य सितं वस्त्रं नृपस्य रक्तमुल्वणम् ।
पीतं वैश्यस्य शूद्रस्य नीलं मलवदिष्यते ॥

बौधायनः-

काषायवासाः कुरुते जपहोमप्रतिग्रहान् ।
न तद्देवगमं भवति, हव्ये कव्यं तथा हविः ॥

प्रयोगपारिजातसंग्रहे-

स्नानं कृत्वाऽऽर्द्रवस्त्रं तु ऊर्ध्वमुत्तारयेद्बुधः ।
आर्द्रवस्त्रमधस्ताच्चेत्पुनः स्नानेन शुद्ध्यति ॥

जाबालिः-

निष्पीडितं धौतवस्त्रं यदा स्कन्धे विनिक्षिपेत् ।
तदासुरं भवेत्कर्म पुनः स्नानं विशोधनम् ॥
वस्त्रं चतुर्गुणीकृत्य निष्पीड्य सदृशं तथा ।
वामप्रकोष्ठे निक्षिप्य स्थलस्थस्य द्विराचमेत् ॥
वस्त्रं त्रिगुणितं यस्तु निष्पीड्यति मन्दधीः ।
वृथा स्नानं भवेत्तस्य स्नानस्य दशधाम्बुभिः ॥

विष्णुपुराणे-

दिनं विभज्यचाष्टधा प्रथमभागयोगतः ।
देवकार्यं ततः कृत्वा गुरुमङ्गलवीक्षणम् ॥
द्वितीये च तथा भागे वेदाभ्यासो विधीयते ।
तृतीये च तथा भागे पोष्यवर्गानुचिन्तनम् ।
चतुर्थे च तथा भागे स्नानार्थमुदमाहरेत् ॥

## मृदाहरणमाह

शातातपः-

शुचिदेशात्तु संग्राह्या शर्कराश्मादिवर्जिता ।
रक्ता गौरा तथा श्वेता मृत्तिका त्रिविधा स्मृता ॥
मृत्तिकाऽऽखूत्कराल्लेपाद् विलाच्च वरिवृक्षयो ।
कृतशौचऽवशिष्टा च न ग्राह्या सप्त मृत्तिकाः ॥
मृत्तिकां गोमयं वाऽपि न निशायां समाचरेत् ।
न गोमूत्र-पुरीषे तु गृह्णीयाद्बुद्धिमान्नरः ॥

दक्षः-

मृत्तिका सप्त न ग्राह्य वल्मिके मूषिकोत्करे ।
अन्तर्जले श्मशाने च वृक्षमूले सुरालये ।
परस्नानावशिष्टाश्च श्रेयः कामैः सदा बुद्धैः ॥

विष्णुः-

ब्रह्मक्षत्रविशां चैव मन्त्रवत् स्नानमिष्यते ।
तुष्णीमेव हि शूद्रस्य स्त्रीणाश्च कुरुनन्दनः ॥

योगियाज्ञवल्क्यो-

गत्वोदकान्तं विधिवत् स्थापयेत्तत् पृथक् क्षितौ ।
त्रिधा कृत्वा मृदन्तान्तु गोमयं तद्विचक्षणः ।
अधमोत्तममध्यानामङ्गानां क्षालनन्तु तैः ।
भागैः पृथक् पृथक् कुर्यात् क्षालने मृदसङ्करम् ॥

वसिष्ठः-

मृदेकया शिरः क्षाल्यं द्वाभ्यां नाभेस्तथोपरि ।
अघश्च तिसृभिः कार्यं षड्भिः पादौ तथैव च ॥
प्रक्षाल्य सर्वकार्यन्तु द्विराचम्य यथाविधिः ।

## स्नानपरिपाटीमाह

दर्भपाणिस्तु विधिना ह्याचान्तः प्रयतः शुचिः ।
तीर्थं प्रकल्पयेद् विद्वान् मूलमन्त्रेण मन्त्रवित् ॥
नमो नारायणायेति मूलमन्त्र उदाहृतः ।
चतुर्हस्त समायुक्तं चतुरस्रं समन्ततः ॥
प्रकल्प्या वाहयेद् गङ्गामेभिर्मन्त्रैर्विलक्षणः ।
विष्णोः पादप्रसूतासि वैष्णवी विष्णुपूजिता ॥
पाहिनस्त्वेनसस्तस्मादाजन्ममरणान्तकात् ।
तिस्रः कोट्याऽर्द्धकोटी च तीर्थानां वायुरब्रवीत् ॥
दिवि भुव्यन्तरीक्षे च तानि ते सन्ति जाह्नवि ।
नन्दिनीत्येव ते नाम देवेषु नलिनीति च ॥
ननन्दा पृथ्वी च सुभगा विश्वकायासि वासिता ।
विद्याधरी सुप्रसन्ना तथा लोक प्रसादिनी ॥
अम्बा च जाह्नवी चैव शान्ता शान्तिप्रदायिनी ।
एतानि पुण्यनामानि स्नानकाले प्रकीर्त्तयेत् ॥
भवेत् सन्निहिता तत्र गङ्गा त्रिपथगामिनी ।
सप्तवाराभिजप्तेन करसम्पुटयोजितम् ॥
मूर्ध्नि कुर्याज्जलं भूयस्त्रिश्चतुः पञ्च सप्त वा ।
स्नानं कुर्यान्मुदा तद्वदामन्त्र्य तु विधानतः ॥
अश्वक्रान्ते रथक्रान्ते विष्णुकान्ते वसुन्धरे ।
मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम् ॥
उद्धृतासि वराहेण कृष्णेन शतवाहुना ।

नमस्ते सर्वलोकानां प्रभवारिणि सुव्रते ॥
आरुह्य मम गात्राणि सर्वपापं व्यपोहय ॥

-पद्मपुराणे पातालखण्डे ९५/१४-२३।

इत्यन्तं पठेत् । सप्तवारिभि जप्तेन इति नारायणमन्त्रेण शेषः । एकवचननिर्देशात् न विष्णोः पादप्रसूतानां इत्यादिमन्त्राणां ग्रहणम्।

वसिष्ठः-

योऽनेन विधिना स्नाति यत्र कृत्वाम्भसि द्विजः ।
स तीर्थफलमाप्नोति तीर्थे च द्विगुणंफलम् ॥

## अथ गङ्गायां विशेषमन्त्राः

विष्णुपादाग्रसम्भूते गङ्गे त्रिपथगामिनि ।
धर्मद्रविति विख्याते पापं मे हर जाह्नवी ॥
श्रद्धया भक्तिसम्पन्ने श्रीमात देवी जाह्नवी ।
अमृतेनाम्बुना देवी भागीरथिपुनीहि माम् ॥
अवगाहनं कर्त्तव्यं कर्णनासिका
मुखअङ्गुलाभिराच्छाद्य कुर्यात् ।
अङ्गुलिभिः पिधायैव श्रोत्रत्वक् नासिकामुखम् ॥
निमज्जेत् प्रतिश्रोतस्त्रिपदेऽघमर्षणम् ।

इति समुद्रकरधृतात् । अत्रापि अनुद्धृते वारत्रयमवगाहनं प्रागुक्तम्। वामनपुराणात् ।

जाबालिः-

स्नानं कृत्वार्द्रवासास्तु विण्मूत्रं कुरुते यदि ।
प्राणायामत्रयं कृत्वा पुनः स्नानेन शुद्ध्यति ॥

मनुः-

न स्नानमाचरेद्भुक्त्वा नातुरो न महानिशि ।
न वासोभिः सहाजस्रं नाविज्ञाते जलाशये ॥

- मनुस्मृतिः ४/१२९ ।

भुक्त्वा रोगप्राप्तनिषेधः । नित्यस्य प्राप्तत्वात् । नैमित्तिकस्य निषेद्धु-मशक्यत्वात् ।

**नैमित्तिकानि काम्यानि निपतन्ति यथा तथा ।**
**तथा तथैव कार्याणि न कालस्तु विधीयते ॥**

इति दक्षोक्तेः । जाबालिः-

**नार्द्रमेवञ्च वसनं परिदध्यात् कथञ्चन ।**

हारीतः-

**आर्द्रं च सप्तवाताहत चापि शुद्ध्यति ।**

यागियाज्ञवल्क्यः-

**पादेन पाणिना वापि यच्च वस्त्रेण चोदकम् ।**
**नहन्यान्न च बाधेत न च प्रक्षोभयेत्तथा ॥**
न कुर्यात् कस्यचित् पीडां कर्मणा मनसा गिरा ।
आचारन्नभिषेकं तु कर्माण्यन्यानि नाचरेत् ॥

देवलः- न नदीषु नदीं कुर्यात् पर्वते न च पर्वतम् ।
नान्यं प्रशंस्येत् तत्रस्थस्तीर्थेष्वायतनेषु च ॥

बौधायनः-

स्रवन्तिष्वनिरुद्धासु त्रयो वर्णा द्विजातयः ।
प्रातरुत्थाय प्रकुर्वीरन् देवर्षि पितृतर्पणम् ॥
निरुद्धासु प्रकुर्वीरन्निति सेतुकृतः स्वयम् ।
तस्मात् परकृतान् सेतून् कूपांश्च परिवर्जयेत् ॥
उद्धृत्य वा त्रीन् पिण्डान् कुर्यादापत्सु नो सदा ।
निरुद्धासु च मृत्पिण्डान् कूपात् त्रिन् पटांस्तथा ॥
निरुद्धासु स्वसेतुभिर्निरुद्ध्य प्रवाहासु च ।

## पिण्डोद्धारः

अतएव मनुनापि निपानकर्त्तुरित्यभिहितम् । न तु निपान स्वामिन इति ।

**परकीयनिपानेषु स्नानं न्नैव कदाचन ।**
**निपानं कर्त्तृस्नात्वा हि दुष्कृतांशेन लिप्यते ॥**

निपानं जलाधारमात्रम् । याज्ञवल्क्यः-

**पञ्चपिण्डाननुद्धृत्य न स्नायात्परवारिषु ।**
**स्नायान्नदीदेवखातह्रदप्रस्रवणेषु च ॥**

-याज्ञवल्क्यस्मृतिः ५/१५९ ।

योगियाज्ञवल्क्यः-

**अनुद्धृत्य तु यः स्नायात्पिण्डान् पर जलाशये ।**
**वृथा तस्य भवेत्स्नानं कर्त्तुः पापेन लिप्यते ॥**
**स्नानाङ्गपिण्डोद्धारदेवतर्पणाङ्गपिण्डोद्धार सिद्धिप्रसङ्गात् ।**

यत्र तु वेगेन निमज्जनं तत्रापि तर्पणार्थं पिण्डा उद्धारणिया इति । ब्रह्मपुराणे-

**नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमुच्यते ।**
**तर्पणं तु भवेत्तस्य तदङ्गत्वेन कीर्त्तितम् ॥**

नित्यमहरहः क्रियमाणम् । नैमित्तिकं सूर्यग्रहादौ अवश्यं कर्त्तव्यम्।

**अस्पृश्य स्पर्शनं कृत्वा स्नायाद्वर्ज्या जलक्रिया ।**

इति ब्रह्मपुराणे । तर्पणनिषेधात् । न तु चाण्डालादिस्पर्शननिमित्तम्।

**श्मश्रुकर्माश्रुपातश्च मैथुनं च्छादनं तथा ।**
**काम्यं स्वर्गादिकं फलं तीर्थस्नानादिकं च यत् ॥**

स्नानाङ्गतर्पणादेव पञ्चयज्ञान्तर्गततर्पणस्य प्रसङ्गात् सिद्धिमाह-मनुः-

**यावत्तर्पयत्यद्भिः पितृन् स्नात्वा द्विजोत्तमः ।**
**तेनैव सर्वमाप्नोति पितृयज्ञक्रियाफलम् ॥**

## अथ तर्पणविधिः

बृहस्पतिः-

**ब्रह्मयज्ञ-प्रसिद्ध्यर्थं विद्याश्चाध्यात्मिकीं जपेत् ।**
**जप्त्वाऽथ प्रणवं वाऽपि ततस्तर्पणमाचरेत् ॥**

विष्णुपुराणे-

शुचिवस्त्रधरः स्नातो देवर्षि पितृतर्पणम् ।
तेषामेव हि तीर्थेन कुर्वीत सुसमाहितः ।।
त्रिरपः प्रीणनार्थाय देवानामपवर्जयेत् ।
अथर्षीणां यथा न्यायं सकृच्चापि प्रजापतेः ।।
पितॄणां प्रीणनार्थाय त्रिरपः पृथिवीपते ।।

वसिष्ठः-

ऋक्सामाथर्ववेदोक्तान् जप्यमन्त्रान् यजूंषि च ।
जप्त्वा चैवं ततः कुर्याद्देवर्षि पितृतर्पणम् ।।

व्यासः-

एकैकमञ्जलिं देवान् द्वौ द्वौ तु शनकादयः ।
अर्हन्ति पितरस्त्रींस्त्रीन् स्त्रियश्चैकैकमञ्जलिम् ।।

अग्निपुराणे-

प्रागग्रेषु सुकरांस्तर्पेन्मनुजाश्चैव मध्यतः ।
पितृंस्तु दक्षिणाग्रेषु चैक द्वि-त्रि-जलाञ्जलिन् ।।

ब्रह्मपुराणे-

कुशाग्रेषु सुरांस्तर्पेन्मनुष्यांश्चैव मध्यतः ।
पितृंस्तु कुशमूलेषु तर्पयेच्च यथाविधिः ।।

कार्ष्णाजिनिः-

श्राद्धे विवाहकाले च पाणिनैकेन दीयते ।
तर्पणे तूभयेनैव विधिरेष पुरातनः ।।

गोभिलः-

नोदकेषु न पात्रेषु न क्रूद्धो नैकपाणिना ।
नोपतिष्ठति तत्तोऽयं यन्न भूमौ प्रदीयते ।।

विष्णुः-

स्थले स्थित्वा जले यस्तु प्रयच्छेदुदकं नरः ।
नोपतिष्ठति तद्वारि पितृणां तन्निरर्थकम् ।।

**स्नानार्द्रवाससा देवर्षि तर्पणमम्भस्यैव कुर्यात् ।**

परिवर्त्तितवासाश्चेत्तीर्थतीरमुतीर्य- विष्णुसूक्तेन वा स्थलस्थानां जले तर्पणमुक्तम् । तत्स्नानकाले जलस्थलैकचरणे नाचमनवतां तद्रूपेणेति स्मार्त्ताः ।

**यत्राशुचिः स्थलं वा स्यादुदके देवता-पितॄन् ।**
**तर्पयेत्तु यथाकाममप्सु सर्वं प्रतिष्ठितम् ।**

विशेषमाह हारीतः-

**वसित्वा वसनं शुष्कं स्थले विस्तीर्णबर्हिषि ।**
**विधिज्ञस्तर्पणं कुर्यान्न पात्रेषु कदाचन ॥**
**पात्राद्वा जलमादाय शुभे पात्रान्तरे क्षिपेत् ।**
**जलपूर्णोऽथवा गर्त्ते न स्थले तु विबर्हिषि ॥**
**केश-भस्म-तुषाङ्गार-कण्टकास्थिसमाकुलम् ।**
**भवेन्महीतलं यस्माद्बर्हिषाऽऽस्तरणं ततः ॥**

कार्ष्णाजिनिः-

**देवतानां पितृणाञ्च जले दद्याजलाञ्जलिम् ।**

उशना-

**द्वौ हस्तौ युग्मतः कृत्वा पुरयेदुदकाञ्जलिम् ।**
**गोशृङ्गमात्रमुद्धृत्य जलमध्ये जलं क्षिपेत् ॥**

योगियाज्ञवल्क्यः-

**अनामिकाधृतं हेम तर्जन्यां रुप्यमेव च ।**
**कनिष्ठिकाधृतं खड्गं तेन पूतो भवेन्नरः ॥**

पात्रविशेषमाह पितामहः-

**हेमरुप्यमयं पात्रं ताम्र-कांस्य-समुद्भवम् ।**
**पितृणां तर्पणे पात्रं मृण्मयन्तु परित्यजेत् ॥**

मरीचिः-

**तिलानामप्यभावे तु सुवर्णं रजतान्वितम् ।**
**तदभावे निषिञ्चेत्तु दर्भैर्मन्त्रेण वा पुनः ॥**

# तिलतर्पणनिषेधः

योगियाज्ञवल्क्यः-

यद्यद्धृतं निषिञ्चेत्तु तिलान् संमिश्रयेज्जले ।
अतोऽन्यथा तु सव्येन तिला ग्राह्या विचक्षणैः ॥

देवलः-

रोमसंस्थान् तिलान् कृत्वा यस्तु तर्पयते पितृन् ।
पितरस्तर्पितास्तेन रुधिरेण मलेन च ॥

वर्णभेदेन तिलानां विनियोगविशेषं दर्शयति स एव ।

शुक्लैस्तु तर्पयेद्देवान् मनुष्यान् शवलैस्तिलैः ।
पितृन् सन्तर्पयेत् कृष्णैस्तर्पयेत् सर्वथा द्विजः ॥

कूर्मपुराणेऽपि देवर्षि पितृतर्पणे दर्शयति-

देवान् ब्रह्मऋषींश्चैव तर्पयेदक्षतोदकैः ।
पितृन् भक्त्या तिलैः कृष्णैः स्वसूत्रोक्त विधानतः ॥

तिथ्यादिविशेषेण तिंलतर्पणं निषेधयति-

सप्तम्यां रविवारे च गृहे जन्मदिने तथा ।
भृत्यपुत्रकलत्रार्थी तिलान् पञ्चसु वर्जयेत् ॥

बौधयनः-

न जीवत्पितृकः कृष्णैस्तिलैस्तर्पणमाचरेत् ।
सप्तम्यां रविवारे च जन्मर्क्षदिवसेषु च ॥
गृहे निषिद्धं सतिलं तर्पणं तद्बहिर्भवेत् ।
विवाहे चोपनयने चौले सति यथाक्रमम् ॥
वर्षमर्द्धं तदर्द्धं च वर्जयेत् तिलतर्पणम् ।
तिथि-तीर्थ-विशेषेषु कार्यं प्रेतेषु सर्वथा ॥
संस्कारेषु तथाऽन्येषु जातपुंसवनादिषु ।
यावन्मासः समाप्येत तावत्पिण्डांश्च वर्जयेत् ॥
वृद्धावनन्तरं प्राज्ञस्तथैव तिलतर्पणम् ॥

ब्रह्मपुराणे -

सन्ध्ययोर्निशि सप्तम्यां न कुर्यात्तिलतर्पणम् ।

स्मृत्यन्तरे -

अयनद्वितये चैव मन्वादिषु युगादिषु ।
पिण्डदानं मृदा स्नानं न कुर्यात्तिलतर्पणम् ॥

गोभिलः -

संक्रान्त्यादिनिमित्तेषु स्नानाङ्गतर्पणं तथा ।
तिथिवारनिषेधेऽपि तिलैस्तर्पणमाचरेत् ॥

संग्रहे -

नन्दायां भार्गवदिने कृत्तिकासु मघासु च ।
भरण्यां भानुवारे च गजच्छायाह्वये तथा ॥
अयनद्वितये चैव मन्वादिषु युगादिषु ।
पिण्डदानं मृदा स्नानं न कुर्यात्तिलतर्पणम् ॥

पारिजाते -

सप्तम्यां रविवारे च मातापित्रोः क्षयेऽहनि ।
तिलैर्यस्तर्पणं कुर्यात्स भवेत्पितृघातकः ॥

मत्स्यपुराणे -

आश्वयुक् शुक्लनवमी कार्त्तिकी द्वादशी सिता ।
तृतीया चैत्रमासस्य तथा भाद्रपदस्य च ॥
फाल्गुनस्य त्वमावास्या पौषस्यैकादशी सिता ।
आषाढस्यापि दशमी माघमास्य सप्तमी ॥
श्रावणस्याष्टमी कृष्णा आषाढस्यापि पूर्णिमा ।
कार्त्तिकी फाल्गुनी चैत्री ज्येष्ठी पञ्चदशी सिता ॥
मन्वन्तरादयश्चैते दत्तस्याक्षयकारकाः ॥

विष्णुपुराणे -

वैशाखमासस्य च या तृतीया नवम्यसौ कार्त्तिकशुक्लपक्षे ।
नभस्य मासस्य च कृष्णपक्षे त्रयोदशी पञ्चदशी च माघे ॥

हलायुधीये-

**द्वादश्यां निशि सप्तम्यां रविशुक्रदिने तथा ।**

**श्राद्धे जन्मदिने चैव न कुर्यात्तिलतर्पणम् ॥**

सत्यव्रतः-

**सप्तम्यां रविवारे च जन्मर्क्षदिवसोत्सवे ।**

**गृहे निषिद्धं सतिलं तर्पणं तद्बहिर्भवेत् ॥**

तिलतर्पणनिषेधप्रसङ्गे संक्रान्तिनिर्णये लिखितम् । तर्पणात्पूर्वं पित्रावाहनमाह कार्ष्णाजिनिः-

**नाभिमात्रे जले स्थित्वा चिन्तयेद्धर्ममानसः ।**

**गृह्णन्तु पितरः सर्वे समागत्य जलाञ्जलिम् ॥**

**सामवेदिनां तु तर्पणवाक्यरचनाः प्रथमान्ते कर्त्तव्याः ।**

यथा-

**गोत्रं स्वरान्तं सर्वत्र गोत्रस्याक्षयकर्मणि ।**

**गोत्रं तु तर्पणे प्रोक्तं कर्त्ता एवं न मुह्यति ॥**

इति गोभिलीयात् । यजुर्वेदीयानां तु सम्बोधनात्तेन । प्रमीतपितृकस्तु पितृनामगोत्रमुच्चार्य यावत् पितृकार्यं करोमि तावत्ते उदकमिति कात्यायनीयात् ।

अशक्तौ तर्पणमाह शङ्खः-

**आब्रह्मस्तम्भपर्यन्तं जगद्देष चराचरम् ।**

**मया दत्तेन तोयेन तृप्यत्वेतच्चतुर्विधम् ॥**

इति अञ्जलित्रयं दद्यात् ।

## तर्पणप्रशंसा

पुराणसारे दर्शिता-

एवं यः सर्वभूतानि तर्पयेदन्वहं द्विजः ।

स गच्छेत् परमं स्थानं तेजोमूर्त्तिमनामयम् ॥

अकरणे प्रत्यवायः पुराणे दर्शितः-

देवतांश्च पितॄंश्चैव मुनीन् वा यो न तर्पयेत् ।
देवादीनामृणी भूत्वा नरकं स व्रजत्यधः ॥

याज्ञवल्क्योऽपि-

नास्तिक्यभावाद्यतांस्तु न तर्पयति वै पितॄन् ।
पिबन्ति देह निस्रावं पितरोऽस्य जलार्थिनः ॥

हारीतोऽपि-

देवाश्च पितरश्चैव काङ्क्षन्ति सतिलाञ्जलिम् ।
अदत्ते तु निराशास्ते प्रतियान्ति यथागतम् ॥

नामग्रहणेऽपि विशेषमाह-

आश्वलायनः-

शर्म्मान्तं ब्राह्मणस्योक्तं वर्म्मान्तं क्षत्रियस्य च ।
गुप्तान्तं चैव वैश्यस्य दासान्तं शूद्रजन्मनः ॥
चतुर्णामपि वर्णानां पितॄणां पितृगोत्रतः ।
पितृगोत्रं कुमारीणां दत्तानां भर्तृगोत्रतः ॥

पितृतर्पणे क्रममाह सत्यव्रतः-

पितृभ्यः प्रत्यहं दद्यात्ततो मातृभ्य एव च ।
ततो मातामहानाञ्च पितृव्यस्य सुतस्य च ॥

विष्णुपुराणे-

दद्यात् पैत्रेण तीर्थेन कामानन्यान् शृणुष्व मे ।
मात्रे प्रमात्रे तन्मात्रे गुरुपत्न्यै तथा नृप ॥
गुरवे मातुलादीनां स्निग्धमित्राय ऋत्विजे ।

विस्तरेण कर्त्तुमसमर्थस्य संक्षेपेण तर्पणमुक्तं विष्णुपुराणे-

आ-ब्रह्म-स्तम्ब-पर्यन्तं जगत्तृप्यत्विति ब्रुवन् ।
क्षिपेत् पयोञ्जलीं स्त्रींस्तु कुर्यात् संक्षेपतर्पणम् ॥

स्मृत्यन्तरे-

आब्रह्मस्तम्बपर्यन्तं देवर्षिपितृमानवाः ।
तृप्यन्तु पितरः सर्वे मातृमातामहादयः ॥

अतीतकुलकोटीनां सप्तद्वीपीनवासिनाम् ।
आब्रह्मभुवनाल्लोकादिदमस्तु तिलोदकम् ॥
एकं जलाञ्जलिं दद्यात्कुर्यात् संक्षिप्ततर्पणम् ।

एवं कुर्वतः फलमाह यमः-

यत्र कश्चन नद्यां हि स्नात्वा कृष्णचतुर्दशीम् ।
सन्तर्प्य धर्मराजानं मुच्यते सर्वकिल्विषैः ॥

जीवत्पितृकतर्पणे विशेषमाह-

योगियाज्ञवल्क्यः-

कव्यवाहोनलः सोमो यमश्चैवार्यमा तथा ।
सोमपाश्चाग्निस्वाताश्च तथा बर्हिषदोऽपि च ॥
यदि स्याज्जीवत्पितृकस्तान् विद्याच्च तथा पितॄन् ।
येभ्यो वाऽपि पिता दद्यात्तेभ्यो वाऽपि प्रदीयते ॥
एतांश्चैव प्रमीतांश्च प्रमीतपितृको द्विजः ॥

तर्पयेदिति शेषः ।

**अवसानाञ्जलिमाह-**

कात्यायनः-

पितृवंश्यान् मातृवंश्यान् ये चान्ये पितरो जनाः ।
ये मत्तस्तूदकमर्हन्ति तांस्तांस्तर्पयाम्यहम् ॥

इत्यवसानाञ्जलिरिति ।

आदित्यपुराणेऽपि-

यत्र क्वचन संस्थानां क्षुतृष्णोपहतात्मनाम् ।
तेषां हि दत्तमक्षय्यमिदमस्तु तिलोदकम् ॥
ये मे कुले लुप्तपिण्डाः पुत्र-पौत्र-विवर्जिताः ।
तेषान्तु दत्तमक्षयमिदमस्तु तिलोदकम् ॥

जीवत्पितृकस्य निषेधे व्यास आह-

मुण्डनं पिण्डदानं च प्रेतकर्म च नित्यशः ।
न जीवत्पितृकः कुर्यात्तिलैः कृष्णैश्च तर्पणम् ॥

जीवत्पितृकं प्रत्याह वृद्धगार्ग्यः-

न कुर्वीतापसव्यं च न कुर्वीतापि मुण्डनम् ।
न जीवत्पितृकः पित्र्यं प्रकुर्वीत कदाचन ॥

अपसव्यनिषेधः प्रकोष्ठादुपरि-

अपसव्यं द्विजग्रमाणां पित्र्ये सर्वत्र कीर्त्तितम् ।
आप्रकोष्ठात्प्रकर्त्तव्यं मातापित्रोस्तु जीवतोः ॥

अस्य कृष्णतिलतर्पणनिषेधमाह-

व्यासः-

न जीवत्पितृकः कुर्यात्तिलैः कृष्णैश्च तर्पणम् ।

कात्यायनः-

दक्षिणं पातयेज्जानु देवान् परिचरन्सदा ।
पातयेदितरंज्जानु पितॄन् परिचरन्नपि ॥

## तर्पणानन्तरं वस्त्रनिष्पीडनम्

तदाह योगियाज्ञवल्क्यः-

यावद्देवानृषींश्चैव पितॄंश्चापि न तर्पयेत् ।
तावन्नपीडयेद्वस्त्रं यो हि स्नातोभवेद्द्विजः ॥
निष्पीडयति यो विप्रः स्नानवस्त्रमतर्प्य च ।
निराशाः पितरो यान्ति शापं दत्वा सुदारुणम् ॥

निष्पीड्यन्तु स्थले कार्यम् ।

तदुक्तं स्मृत्यन्तरे-

वस्त्रनिष्पीडितं तोयं श्राद्धे चोच्छिष्टभोजिनाम् ।
भागधेयं श्रुतिः प्राह तस्मान्निष्पीडयेत् स्थले ॥

विष्णुपुराणे-

आचम्य च ततो दद्यात् सूर्याय सलिलाञ्जलिम् ।
नमो विवस्वते ब्रह्मन् भास्वते विष्णुतेजसे ॥
जगत् सवित्रे शुचये सवित्रे कर्मदायिने ।

# अथ कुशविधिः

हारीतः-

अच्छिन्नाग्रान् सपत्रांश्च समूलान् कोमलान् शुभान् ।
पितृ-देवर्षि-पूजार्थं समादध्यात् कुशान् द्विजः ॥
कुशहस्तेन यज्जप्तं पानञ्चैव कुशैः सह ।
कुशहस्तस्तु यो भुङ्क्ते तस्य संख्या न विद्यते ॥

पुराणान्तरेऽपि-

कुशपूतं भवेत् स्नानं कुशेनोपस्पृशेत् द्विजः ।
कुशेन चोद्धृतं तोयं सोमपानेन सम्मितम् ॥

गोभिलोऽपि-

कुशमूले स्थितं ब्रह्मा कुशमध्ये जनार्दनः ।
कुशाग्रे शङ्करं विद्यात् त्रयो देवाव्यवस्थिताः ॥

कौशिकः-

शुचौ देशे शुचिर्भूत्वा स्थित्वा पूर्वोत्तरामुखः ।
ॐकारेणैव मन्त्रेण कुशाः स्पृश्याद्द्विजोत्तमैः ॥

कुशाभावे शङ्खः-

कुशाभावे द्विजश्रेष्ठः काशैः कुर्वीत यत्नतः ।
तर्पणादीनि कर्माणि काशाः कुशसमाः स्मृताः ॥

यमोऽपि-

कुशाः काशा यवा दूर्वास्तथा ब्रीहय एव च ।
वल्लजाः पुण्डरीकाश्च सप्तधा बर्हिरुच्यते ॥

## कुशोत्पाटने काल नियममाह

हारीतः-

मासे नभस्यमावास्या तस्यां दर्भचयोमतः ।
आयातयामास्ते दर्भा नियोज्याः स्यु पुनः पुनः ॥

शङ्खः-

दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणश्च विशेषतः ।
अयातयान्येतानि नियोज्यानि पुनः पुनः ॥

वर्ज्यानाह हारीतः-

चित्तौ दर्भाः पथि दर्भा ये दर्भा यज्ञभूमिषु ।
स्तरणासनपिण्डेषु षट्कुशान् परिवर्ज्जयेत् ॥
ब्रह्मयज्ञेषु ये दर्भा ये दर्भाः पितृतर्पणे ।
हता मूत्रपुरीषाभ्यां तेषां त्यागो विधीयते ॥
अपूता गर्हिता दर्भा ये संच्छिन्नाः नखैस्तथा ।
क्वथितानग्निदग्धांश्च कुशान् यत्नेन वर्ज्जयेत् ॥

## कुशास्तरणमाह

योगियाज्ञवल्क्यः-

आवाह्य पूर्ववत्पत्रैरास्तीर्य च कुशान् शुचीन् ।
प्रागग्रेषु सुरान् सम्यग् दक्षिणाग्रेषु वै पितॄन् ॥

दक्षः-

प्रादेशमात्रमुद्धृत्य सलिलं प्राङ्मुखः सुरान् ।
उदङ्मनुष्यांस्तर्प्येत पितॄन् दक्षिणतस्तथा ॥

तर्पयेदिति शेषः-

अग्रे तु तर्पयेद्देवान् मनुष्यान् कुशमध्यतः ।
पितॄंस्तु कुशमूलाग्रे विधिः कोशो यथाक्रमम् ॥

उद्धृतोदके तु हारीतः-

वसित्वा वसनं शुष्कं स्थले विस्तीर्णवर्हिषि ।
विधिज्ञस्तर्पणं कुर्यान्न पात्रेषु कदाचन ॥
पात्राद्वा जलमादाय शुभे पात्रान्तरे क्षिपेत् ।
जलपूर्णेऽथवा गर्त्ते न स्थले तु विवर्हिषि ॥

पात्रान्तरविषयसद्भावमेतत् । पद्मपुराणीयस्थाने यदुक्तं तर्पणम् ।

यथा-

ततस्तु तर्पणं कुर्यात्त्रैलोक्याप्यायनाय वै ।
ब्रह्माणं तर्पयेत्पूर्वं विष्णुं रुद्रं प्रजापतीन् ॥
देवा यक्षस्तथा नागा गन्धर्वाप्सरसां गणाः ।
क्रूरास्तर्पास्सुपर्णाश्च तरभो जृम्भकादयः ॥
विद्याधरा जलधरास्तथैवाकाशगामिनः ।
निराधाराश्च ये जीवा पापधर्मरताश्च ये ॥
तेषामाप्यायनायै तद्दीयते सलिलं मया ।
कृतोपवीतो देवेभ्यो निवीती च भवेत्ततः ॥
मनुष्यांस्तर्पयेद्भक्त्या ऋषिपुत्रानृषींस्तथा ।
सनकश्च सनन्दश्च तृतीयश्च सनातनः ॥
कपिलश्चासुरिश्चैव बोढुः पञ्चशिखस्तथा ।
सर्वे ते तृप्तिमायान्तु मद्दत्तेनाम्बुना सदा ॥
मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् ।
प्रचेतसं वसिष्ठं च भृगुं नारदमेव च ॥
देवब्रह्मऋषीन्सर्वास्तर्पयेत्साक्षातोदकैः ।
अपसव्यं ततः कृत्वा सव्यं जानु च भूतले ॥
अग्निस्वात्तांस्तथा सौम्यान्हविष्यन्तस्तथोष्मपान् ।
सुकालिनो बर्हिषदंस्तथा चैवाज्यपान्पुनः ॥
सन्तर्पयेत्पितृम्भक्त्या इमं मन्त्रमुदीरयेत् ॥
येऽबान्धवाबान्धवा येऽन्यजन्मनि बान्धवाः ।
ते तृप्तिमखिला यान्तु येऽप्यस्मत्तोयकाङ्क्षिणः ॥
आचम्य विधिना सम्यगालिखेत्पद्ममग्रतः ।
साक्षाताद्भिस्सपुष्पाभिः सतिलागरुचन्दनैः ॥
अर्घ्यं दद्यात्प्रयत्नेन सूर्यनामानुकीर्त्तनैः ।
नमस्ते विश्वरूपाय नमस्ते विष्णुरूपिणे ॥

सर्वदेव नमस्तेऽस्तु प्रसीद मम भास्कर ।
दिवाकर नमस्तेऽस्तु प्रभाकर नमस्तेऽस्तु ते ॥
एवं सूर्यं नमस्कृत्य त्रिः कृत्वा च प्रदक्षिणम् ।
द्विजं गां काञ्चनं चैव दृष्ट्वा गृहे च संव्रजेत् ॥
स्वगेहस्थां ततः पुण्यां प्रतिमां चापिपूजयेत् ।
भोजनं च ततः पश्चाद् द्विजपूर्वं च कारयेत् ॥

-पद्मपुराणे सृष्टिकाण्डे २०/१५५-१७२ ।

# कुशाहरणविधिः

अनेन विधिना सर्वे ऋषयः सिद्धिमागता ।
याज्ञवल्क्यः-

अन्वारब्धेन सर्वेण पाणिना दक्षिणेन तु ।
तृप्यतामिति व्यक्तव्यं नाम्ना प्रणववादिना ॥

इति याज्ञवल्क्यवचनात् ।

देवा इत्यादि दत्तेन चाभ्रलिंङ्गादेकोऽञ्जलिः ।
तथा सनक इत्यादि सदयस्ते नमोऽञ्जलिः ॥

पितृपक्षातिरिक्तेऽञ्जलिपदं वामकरं वधतप्तरम् । सनकादिमनुष्याणां तर्पणं वामाङ्गेन प्राङ्मुखं कर्त्तव्यम् । तथा च परिशिष्टप्रकाशधृतम्। प्रजापतितीर्थेन ह्युदङ्मुख इति यजुर्वेदीयानाम् । ततो मरीच्यादितर्पणं देववत् । ततोऽपसव्यं कृत्वा पितृतीर्थेन अग्निशान्त्यादीनां सन्तर्पयेत्। ततो मातामहादींश्च त्रीन् तर्पयेत् । ततो ये बान्धवा इत्यादिना वसन्ताञ्जलिः । ततोऽसंस्कृतमृतान्नुद्दिश्य अग्निदग्धेत्यादिभूमावेकोऽञ्जलिः ।

वस्त्रनिष्पीडनं तोयं स्थानमोच्छिष्टभागिनः ।
अपुत्रिणां भागधेयं तस्मान्निष्पीडयेत् स्थले ॥
वस्त्रनिष्पीडितं तोयं श्राद्धे चोच्छिष्टभोजिनाम् ।
भागधेयं श्रुतिः प्राह तस्मान्निष्पीडयेत् स्थले ॥

## अथ सन्ध्योपासनमाह

योगियाज्ञवल्क्यः-

अतः परं प्रवक्ष्यामि सन्ध्योपासननिर्णयम् ।
अहोरात्रकृतैः पापैर्यामुपास्य प्रमुच्यते ॥
सर्वावस्थाऽपि यो विप्रः सन्ध्योपासनतत्परः ।
ब्राह्मण्याच्च न हीयेत अन्यजन्मगतोऽपि सन् ॥

तत्र छान्दोगपरिशिष्टं-

अतः ऊर्ध्वं प्रवक्षामि सन्ध्योपासनकं विधिम् ।
अनर्हः कर्मणां विप्रः सन्ध्याहीनो यतः स्मृतः ॥

अथ प्रातः स्नानानन्तरं विष्णुपुराणम्-

सर्वकालमुपस्थानं सन्ध्यायां पार्थिवेष्यते ।
अन्यत्र सूतकादौ चाशौचवन्मातुरमिति ॥

तेन तत्रापि सन्ध्यामारचन्ति ।

व्यासः-

उपास्ते सन्धिवेलायां निशायाः दिवसस्य च ।
तामेव सन्ध्यां तस्मात्तु प्रवदन्ति मनीषिणः ॥

## उपासनोपक्रमकालमाह

सम्बर्त्तः-

प्रातः सन्ध्यां सनक्षत्रामुपासीत यथाविधि ।
सादित्यां पश्चिमां सन्ध्यामर्धास्तमितभास्करम् ॥

मध्याह्नसन्ध्यामष्टमुहूर्त्तकालमाहः स्मृतिः ।

पूर्वापरे सनक्षत्रे तथा सन्ध्ये प्रकीर्त्तिते ।
अन्या कार्या च मध्याह्ने मुहूर्त्ते सप्तमोपरि ॥

छान्दोगपरिशिष्टे-

यस्य कुले सन्ध्या नास्ति तत्र नम ब्राह्मणायेति उच्यते ।

**दिवाशक्तौ रात्रौ तत्कारणमाह-**

स्मृतिः-

पूर्वाह्णे विहितं कर्म अकृतं यत् प्रमादतः ।
रात्रेस्तु प्रहरं यच्च कर्त्तव्यं तु यथोक्तवत् ॥

बृहस्पतिः-

वध्वासनं नियम्यासून् स्मृत्याऽऽचार्यादिकं तथा ।
सन्निमीलितं दृङ्मौनी प्राणायामं समभ्यसेत् ॥

छन्दोगपरिशिष्टे-

प्रणवो भूर्भुवः स्वश्च सावित्री च तृतीयका ।
अब्दैवत्यस्तृचश्चैव चतुर्थ इति मार्जनम् ॥
भूराद्यास्तिस्र एवैता महाव्याहृतयोऽव्ययाः ।
महर्जनस्तपः सत्यं गायत्री च शिरस्तथा ॥

'आपोज्योतिरसोऽमृतं ब्रह्म भूर्भुवः स्वः' इति शिरः प्रतिप्रतीकं प्रणवमुच्चारयेदन्ते च शिरसः ।

एतां एतां सहैतेन तथैभिर्दशभिः सह ।
त्रिर्जपेदायतप्राणः प्राणायामः स उच्यते ॥
करेणोद्धृत्य सलिलं घ्राणमासज्य तत्र च ।
जपेदनायतासुर्वा त्रिः सकृद्वाघमर्षणम् ॥
उत्थायार्कं प्रति प्रोक्षेत् त्रिकेणाञ्जलिमम्भसः ।

व्यासः-

आदानं रोषमुत्सर्गं वायोस्त्रिस्त्रिः समभ्यसेत् ।
ब्राह्मणं केशवं रुद्रं ध्यायेदेवानुक्रमेत् ॥

निमित्तिनी वीप्सासन्ध्यान्नपेक्षया, अत्र ऋष्यादिस्मरणमाह-

विष्णुपुराणे-

ऋषिछन्दश्च दैवत्यं विनियोग स्तथैव च ।
वेदितव्यं प्रयत्नेन ब्राह्मणेन विशेषतः ॥

ऋष्यादिकमाह-

सम्बर्त्तः-

ॐकारस्य ब्रह्मा ऋषिः देवोऽग्निस्तस्य कथ्यते ।
गायत्री च भवेच्छन्दो विनियोज्य तु कर्मसु ॥
ऋष्यादिन्यासस्तु कर्त्तव्यं प्रारम्भे सर्वकर्मसु ।
व्याहृतीनां च सप्तानामृषिश्चैव प्रजापतिः ॥
गायत्र्युष्णिगनुष्टुप् च वृहती पङ्क्तिरेव च ।
त्रिष्टुप् च जगती चैव च्छान्दांस्येतानि सप्त वै ॥
अग्निर्वायुस्तथा सूर्यो बृहस्पतिरपांपतिः ।
इन्द्रश्च विश्वदेवाश्च देवताः समुदाहृताः ॥
प्राणानाञ्च मनश्चैव विनियोग उदाहृतः ॥

## सन्ध्योपासनाप्रकारः

कूर्मपुराणे दर्शितः-

प्राक्कुलेषु ततः स्थित्वा दर्भेषु च समाहितः ।
प्राणायामत्रयं कृत्वा ध्यायेत् सन्ध्यामिति श्रुतिः ॥

याज्ञवल्क्यः-

प्राणानाचम्य संप्रोक्ष्य तृचेनाब्दैवतेन तु ।
जपन्नासीत् सावित्रीं प्रत्यगातारकोदयात् ॥

-याज्ञवल्क्यस्मृतिः १/२४ ।

बृहस्पतिः-

वध्वासनं नियम्यासून् स्मृत्याऽऽचार्यादिकं तथा ।
सन्निमीलित दृङ्मौनी प्राणायामं समभ्यसेत् ॥

## प्राणायामलक्षणम्

मनुः-

सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥

याज्ञवल्क्यः-

गायत्रीं शिरसा सार्द्धं जपेद्व्याहृतिपूर्विकाम् ।
प्रतिप्रणवसंयुक्तां त्रिरयं प्राणसंयमः ॥

-याज्ञवल्क्यस्मृतिः १/२३ ।

योगियाज्ञवल्क्योऽपि-

भूर्भुवः स्वर्महर्जनः तपः सत्यं तथैव च ।
प्रत्योंकार-समायुक्तस्तथा तत् सवितुः परम् ॥
ॐ आपोज्यातिरित्येतच्छिरः पश्चात् प्रयोजयेत् ।
त्रिरावर्त्ततयोगात्तु प्राणायामः प्रकीर्त्तितः ॥

स च प्राणायामः पूरक-कुम्भक-रेचकभेदेन त्रिविधः ज्ञेयः । तथा च योगियाज्ञवल्क्यः-

पूरकः कुम्भको रेच्यः प्राणायामस्त्रिलक्षणः ।
नासिकाऽऽकृष्ट उच्छ्वासध्मातः पूरक उच्यते ॥
कुम्भक निश्चलः श्वासो रेच्यमानस्तु रेचकः ॥

## मार्जनमाह

व्यासः-

आपोहिष्ठेत्यृचैः कुर्यान्मार्जनन्तु कुशोदकैः ।
प्रणवेन तु संयुक्तं क्षिपेद्वारि पदे पदे ॥
वपुष्यष्टौ क्षिपेदूर्ध्वमधो यस्य क्षयाय च ।
रजस्तमोमोहमयान् जाग्रत् स्वप्नसुषुप्ति जान् ॥
वाङ्-मनः-कायजान् दोषान् नवैतान् नवभिर्दहेत् ॥

शातातपः-

ऋगन्ते मार्जनं कुर्यात् पादान्ते वा समाहितः ।
अर्द्धर्च्चान्तेऽथवा कुर्याच्छिष्टानां मतमीदृशम् ॥

हारीतोऽपि-

मार्जनार्च्चन-बलिकर्म-भोजनानि दैवतीर्थेन कुर्यात् । तच्च मार्जनं न धाराच्युतौ कार्याम् ।

तथा ब्रह्मा-

धाराच्युतेन तोयेन सन्ध्योपास्ति विगर्हिता ।
पितरो न प्रशंसन्ति न प्रशंसन्ति देवताः ॥

कथं तर्हि मार्जनमिति, तत्राह स एव-

नद्यां तीर्थे तटे वाऽपि भोजने मृण्मयेऽपि वा ।
औदुम्बरेऽथ सौवर्णे राजते दारुसम्भवे ॥
कृत्वा तु वामहस्ते वा सन्ध्यानित्यं समाचरेत् ।

मृण्मयादिपात्रसद्भावे तु वामहस्तस्य प्रतिषेधः ।

वामहस्ते जलं कृत्वा ये तु सन्ध्यामुपासते ।
सा सन्ध्या वृषली ज्ञेया असुरास्तेषु तर्पिताः ॥

भारद्वाजः-

सायमग्निश्च मेत्युक्त्वा प्रातः सूर्येत्यपः पिबेत् ।
आपः पुनन्तु मध्याह्ने ततश्चाचमनञ्चरेत् ॥

कात्यायनोऽपि-

शिरसो मार्जनं कुर्यात् कुशैः सोदकविन्दुभिः ।
प्रणवो भूर्भुवः स्वश्च गायत्री च तृतीयिका ॥
अब्दैवत्यं त्यृच्यं चैव चतुर्थमिति मार्जनम् ।

मार्जनानन्तरं प्रजापतिः-

जलपूर्णं तथा हस्तं नासिकाग्रे समर्पयेत् ।
ऋतञ्चेति पठित्वा तु तज्जलन्तु क्षितौ क्षिपेत् ॥

ततः सूर्यायार्घ्यं दद्यात् । तथा च व्यासः-

कराभ्यां तोयमादाय गायत्र्या चाभिमन्त्रितम् ।
आदित्याभिमुखस्तिष्ठन् त्रिरुर्द्धमथ चोत्क्षिपेत् ॥

अर्घ्यदाने मन्त्रान्तरमुक्तं विष्णुना-

कराभ्यामञ्जलिं कृत्वा जलपूर्णं समाहितः ।
उद्धृत्यमितिमन्त्रेण तत्तोयं प्रक्षिपेद्भुवि ॥

ततः प्रदक्षिणं कृत्वा उदकं स्पृशेत् ।

तदुक्तं वराहपुराणे-

सायं मन्त्रवदाचम्य प्रोक्ष्य सूर्यस्य चाञ्जलिम् ।
दत्वा प्रदक्षिणं कृत्वा जलं स्पृष्ट्वा विशुध्यति ॥

कूर्मपुराणम्-

अथोपतिष्ठेदादित्यमुदयन्तं समाहितः ।
मन्त्रैस्तु विविधैः सौरैः ऋग्यजुः सामसम्भवैः ॥

## उपस्थाने विशेषमाह

छान्दोगपरिशिष्टे-

उदसंयुक्तपार्ष्णि वा एकपादूर्ध्वपादपि ।
कुर्यात्कृताञ्जलिर्वापि ऊर्ध्वबाहु रथापि वा ॥

हारीतः-

सायं प्रातरुपस्थानं कुर्यात्प्राञ्जलिना ततः ।
ऊर्ध्वबाहुस्तु मध्याह्ने स्तथा सूर्यस्य दर्शनात् ॥

ऋष्यादिकमाह व्यासः-

उदितचेतमन्त्रस्य ऋषि प्रस्कन्द उच्यते ।
गायत्रीच्छन्द इत्यस्य सूर्यो दैवतमेव च ॥
तत्र देवेत्यादि ऋचो ऋषि कौत्स उदाहृतः ।
त्रिष्टुप्च्छन्दः दैवतं च सूर्योऽसौ परिकीर्त्तितः ॥
ततस्तर्पणाधिकारे तर्पणं विधाय गायत्री जपं कुर्यात् ।

## उपस्थानलक्षणम्

वृत्तौ-

मन्त्रमुच्चारयन्नेव मन्त्रार्थत्वेन संस्मरन् ।
शेषिणं तन्मना भूत्वा स्यादेतदनुमन्त्रणम् ॥
एतदेवाभिमन्त्रस्य लक्षणं चेक्षणाधिकम् ।
अद्भिः संस्पर्शनाधिक्यात्त देवाऽऽप्यायनं स्मृतम् ॥
उपस्थानं तदेव स्यात्प्रणतिस्थानसंयुतम् ॥

शङ्खः-

प्रणवो भूर्भुवः स्वः अङ्गानि हृदयादयः ।
त्रिराहृत्य ततः पश्चादृषिश्छन्दस्य दैवतम् ॥
विनियोगस्तथारूपं ध्यातव्यः क्रमपूर्वकम् ।
ॐ भूर्भुवः स्वः इत्यक्षरपञ्चकम् ।
हृदयशिरः शिखा सर्वगात्र करद्वयेषु प्रत्येकं न्यसेत् ।

गायत्री ऋष्यादिमुक्तं प्राणायामे-

आवाहनं सामगानाम् आयाहीति च मन्त्रेण
यजुर्वेदीनां तु तेजोसीति वाह्यन्तरीयेन ।
गायत्रीत्यादि नापरो रजस इत्यन्तेन तु
मन्त्रेण नमस्कृत्य विक्षमाणोक्तं ध्वात्वा जपेत् ।

स्मृतिः-

गायत्री ब्रह्मरूपा तु सावित्री रुद्ररूपिणी ।
सरस्वती विष्णुरूपा उपास्या रूपभेदतः ॥

योगियाज्ञवल्क्यः-

पूर्वा सन्ध्या तु गायत्री सावित्री मध्यमा स्मृता ।
या भवेत्पश्चिमा सन्ध्या सा विज्ञेया सरस्वती ॥
श्वेता भवति सावित्री गायत्री रक्तवर्णिका ।
कृष्णा सरस्वती ज्ञेया सन्ध्यात्रयमुदाहृतम् ॥

तथा- ॐकार व्याहृतिः सप्त गायत्र्या शिरसा सह ।
आपो हिष्ठा ऋचस्तिस्रः सूक्तं चैवाघमर्षणम् ॥
आदित्यस्मरणार्थाय सायं प्रातर्दिने दिने ।
सृष्टं स्वयम्भुवा पूर्वं ब्रह्मणास्तन्मुखं स्मृतम् ॥

याज्ञवल्क्यः-

स्नानमब्दैवतैर्मन्त्रैर्मार्जनं प्राणसंयमः ।
सूर्यस्य चाप्युपस्थानं गायत्र्याः प्रत्यहं जपः ॥

-याज्ञवल्क्यस्मृतिः १/२२ ।

व्यासः-

न भिन्नां प्रतिपद्येत गायत्रीं ब्रह्मणा सह ।
सोऽहमस्मीत्यूपासीत विधिना येन केनचित् ॥

## अथ सन्ध्याङ्गजपविधिः

मनुः- आचम्य प्रयतोनित्यमुभे सन्ध्ये समाहितः ।
शुचौ देशे जपन् जप्यमुपासीत यथाविधि ॥
- मनुस्मृतिः २/२२२ ।

तथा- पूर्वां सन्ध्यां जपंस्तिष्ठेत् सावित्रीमर्कदर्शनात् ।
पश्चिमां तु समासीनः सम्यगृक्षविभावनात् ॥
- मनुस्मृतिः २/१०१ ।

व्यासः-

प्रणवो व्याहृतिः युतां गायत्रीश्च जपेत्ततः ।

योगियाज्ञवल्क्यः-

ॐकारं पूर्वमुच्चार्य भूर्भुवः स्वस्तथैव च ।
गायत्रीं प्रणवं चान्ते जप एवमुदाहृतः ॥

मनुः- ॐकारं चाप्युकारं च मकारं च प्रजापतिः ।
वेदत्रयान्निरदुहद्भूर्भुवः स्वरितीति च ॥
त्रिभ्य एव तु वेदेभ्य पादं पादमदुदूहत् ।
तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी प्रजापतिः ॥
एतदक्षरमेतां च जपन् व्याहृतिपूर्विकाम् ।
सन्धयोर्वेदविद्विप्रो वेदपुण्येन युज्यते ॥
-मनुस्मृतिः २/७६-७८ ।

## जपयज्ञस्य भेदः

नृसिंहपुराणे-

त्रिविधो जपयज्ञः स्यात्तस्य भेदान् निबोधत ।
वाचिकस्य उपांशुश्च मानस त्रिविधः स्मृतः ॥

त्रयाणां जप यज्ञानां श्रेयः स्यादुत्तरोत्तरः ।

वाचिकोपांशु त्वयर्लक्षणं पुराणेऽभिहितम्-

यदुच्च नीचस्वरितैः शब्दैः स्पष्टपदाक्षरैः ।
मन्त्रमुच्चारयेद्वाचा वाचिकोऽयं जपः स्मृतः ॥
शनैरुच्चारयेन्मन्त्रमीषदोष्ठौ प्रचालयन् ।
अपरैरश्रुतः किञ्चित् स उपांशु जपः स्मृतः ॥

विश्वामित्रेण मानसलक्षणमुक्तम्-

ध्यायेद् यदक्षरश्रेणी वर्णाद्वर्णं पदात्पदम् ।
शब्दार्थचिन्तनं भूयः कथ्यते मानसो जपः ॥

त्रयाणां तारतम्यञ्च तेनैवोक्तम्-

उत्तमं मानसं जप्यमुपांशु मध्यमं स्मृतम् ।
अधमं वाचिकं प्राहुः सर्वमन्त्रेषु वै द्विजाः ॥
वाचिकस्यैकमेकं स्यादुपांशु शतमुच्यते ।
साहस्रो मानसः प्रोक्तो मन्वत्रिभृगुनारदैः ॥

## जपनियममाह

शौनकः-

कृत्वोत्तानौ करौ प्रातः सायञ्चाधोमुखोस्तथा ।
मध्ये स्तम्बकराभ्यान्तु जप एवमुदाहृतः ॥
मनः सन्तोषणं शौचं मौनं मन्त्रार्थचिन्तनम् ।
अव्यग्रत्वमनिर्वेदो जपसंपतिहेतवः ॥

शङ्खः-

पूर्वां सन्ध्यां जपेत्तिष्ठन्नासीनः पश्चिमां तथा ।
ततो जपेत्पवित्राणि पवित्रं वा स्वशक्तितः ॥
ऋषयो दीर्घसन्ध्यत्वाद्दीर्घमायुरवाप्नुवन् ।

मध्याह्न जपस्य नियमः वायुपुराणे दर्शितः ।

तथा मध्याह्न-सन्ध्यायामासीनः प्राङ्मुखो जपेत् ॥

वर्ज्यानाह व्यासः-

न संक्रामन् न च हसन् न पार्श्वमवलोकयन् ।
नायासितो न जल्पंश्च न प्रावृतशिरस्तथा ॥
न पदा पादमाक्रम्य न चैव हि तथा करौ ।
न चासमाहितमना न च संश्रावयन् जपेत् ॥

बौधायनः-

नाभेरधः संस्पर्शनं कर्मसंयुक्तो वर्जयेत् ।

मदनपारिजातेऽपि-

मध्यमायां द्वयं पर्व जपकाले विवर्जयेत् ।
सहस्र परमां देवीं शतमध्यां दिगम्बरां ॥
गायत्री च जपन् विप्रो न स पापेन लिप्यते ।

शङ्खः-

नोच्चैर्जपं बुधः कुर्यात्सावित्र्या तु विशेषतः ॥

व्यासोऽपि-

जपकाले न भाषेत व्रतहोमादिकेषु च ।
एतेध्वेवावसक्तस्तु यद्यागच्छेत् द्विजोत्तमः ॥
अभिवाद्य ततो विप्रं योगक्षेमञ्च कीर्त्तयेत् ।

छन्दोगपरिशिष्टे-

यत्र स्यात्कृच्छ्रभूयस्तवं श्रेयसोऽपि मनीषिणः ।
भूयस्त्वं ब्रूवते तत्र कृच्छ्राच्छ्रयो ह्यवाप्यते ॥
तिष्ठेदोदयनात्पूर्वां मध्यमामपि शक्तितः ।
आसीतोद्गमाच्चान्त्यां सन्ध्यां पूर्वत्रिकं जपन् ॥

यागियाज्ञवल्क्योऽपि-

यदि वाग्यमलोपः स्याज्जपादिषु कदाचन ।
व्याहरेद्वैष्णवं मन्त्रं स्मरेद्वा विष्णुमव्ययम् ॥

संवर्त्तोऽपि-

लोकवार्त्ताऽदिकं श्रुत्वा दृष्ट्वा स्पृष्ट्वा प्रभावितम् ।

संख्यां विना च यज्जप्तं तत्सर्वं निष्फलं भवेत् ॥
ॐ महेशवदनोत्पन्नोऽनेन मन्त्रेण सामगाः ।
उत्तरे शिखरे यातेऽनेन यजुर्विच्च विसर्जयेत् ॥

ततः आदित्यशुक्राभ्यां नम इत्यनेन उदकाञ्जलिं त्यजेत् । ततः यावेदसे स्वनवामेति मन्त्रेणात्मरक्षणं रुद्रमित्यनेन रुद्रोपस्थानं चानिरुध्य उक्तेनाधिकमुक्तं सामगेन तत्कार्यमिति विष्णुधर्मोत्तरे-

यातवेद स इत्येतज्जपेत् । स्वस्तायनं पथि ।
इचैर्विमुच्यते सर्वैः स्वस्तिमान् प्राप्नुयाद्गृहम् ।
ततो ब्रह्मवरुणरुद्रेभ्यः प्रत्येकमञ्जलिन् दद्यात् ॥

ततो ब्रह्मयज्ञः-

दर्भेषु दर्भपाणिः स्यात्प्राङ्मुखस्तु कृताञ्जलिः ।
स्वाध्यायं च यथाशक्ति ब्रह्म यज्ञार्थमाचरेत् ॥

इति याज्ञवल्कीयात् । नरसिंहे-

सन्ध्यां कृत्वा तु दत्वार्घ्यं ततः पश्येद्दिवाकरम् ।

अर्घमन्त्रस्तु- "ॐ नमो विवस्वते इति ।"

पद्मपुराणे-

सर्वदेव नमस्तेऽस्तु प्रसीद मम भास्कर ।
दिवाकर नमस्तेऽस्तु प्रभाकर नमस्तुते ॥
एवं सूर्यं नमस्कृत्य त्रिश्चतुर्वा प्रदक्षिणम् ।
द्विजं वा काञ्चनं स्पृष्ट्वा ततो विष्णुगृहं ब्रजेत् ॥ इति ।

नरसिंहपुराणे-

ततो गृहार्च्चनं कुर्यादभीष्टं सुरपूजनम् ।
जलाभिषेकपुष्पाणां धूपादेश्च निवेदनैः ॥

कालीपुराणे-

शिवं भास्करमग्निं च केशवं कौशिकं तथा ।
मनसा नार्च्चयन् याति देवलोकादधोगति ॥

मनसेत्यन्वयः । ततः प्रथमं सूर्यपूजनम् ।

संपूज्य प्रथमं सूर्यमपरान् यः प्रपूजयेत् ।
एतद्वः सुकृतं पापं संप्रतिच्छन्ति देवताः ॥

भविष्ये-

देवार्च्चादौ यदा मोहाद् गणेशं न प्रपूजयेत् ।
तदा पूजाफले विघ्नं विघ्नराजः करोत्ययम् ॥

एतेन गणेशपूजनस्यादित्यमुक्तम् । तत्सूर्यपूजातिरिक्तकेयं ।

आदित्य-गणनाथं च देवीं रुद्रं यथाक्रमम् ।
नारायणशुद्धरूपं पञ्चदेवं प्रपूजयेत् ॥

तदनन्तरं वैश्वदेवमावाहयेत् ।

## वैश्वदेवप्रकरणम्

नृसिंहपुराणे-

पौरुषेण च सूक्तेन ततो विष्णुं सर्च्चयेत् ।
विश्वदेवं ततः कुर्याद्बलिकर्म तथैव च ॥

दक्षः-

पञ्चमे च तथा भागे संविभागो यथार्हतः ।
पितृदेव मनुष्याणां कीटानां चोपदिश्यते ॥

व्यासः-

वैश्वदेवं प्रकुर्वीत स्वशाखाविहितं ततः ।
संस्कृतान्नैर्हि विविधैर्हविष्यव्यञ्जनान्वितैः ॥
तैरेवान्नैर्बलिं दद्याच्छेषमाप्लाव्य वारिणा ।
कृत्वाऽपसव्यं स्वधया सर्वदक्षिणतो हरेत् ॥

ततो देवार्च्चनानन्तरमित्यर्थः । नारायणोऽपि-

सभार्यस्तु शुचिः स्नातो विधिनाऽऽचम्य वाग्यतः ।
प्रविश्य सुसमिद्धेऽग्नौ वैश्वदेवं समाचरेत् ॥

कूर्मपुराणेऽपि-

शालाग्नौ लौकिके वाऽथ जले भूम्यामथापि वा ।

वैश्वदेवस्तु कर्त्तव्यो देवयज्ञः स वै स्मृतः ।।
यदि स्याल्लौकिके पाकः ततोऽन्नं तत्र हूयते ।
शालाग्नौ तु पचेदन्नं विधिरेव सनातनः ।।

अङ्गिराः-

शालाग्नौ वा पचेदन्नं लौकिके वाऽपि नित्यशः ।
यस्मिन्नग्नौ पचेदन्नं तस्मिन् होमो विधीयते ।।

शातातपोऽपि-

लौकिके वैदिके वाऽपि हूतोत्सृष्टे जले क्षितौ ।
वैश्वदेवस्तु कर्त्तव्यः पञ्चसूनाऽपनुत्तये ।।

सूनाः पञ्च दर्शयति यमः-

पञ्च सूना गृहस्थस्य वर्त्तन्तेऽहरहः सदा ।
कण्डनी पेषणी चुल्ली जलकुम्भ उपस्करः ।।
एतानि वाहयन् विप्रो वध्यते वै मुहुर्मुहुः ।
एतासां पावनार्थाय पञ्चयज्ञाः प्रकीर्त्तिताः ।।

भविष्यपुराणम्-

कृत्वा श्राद्धं यथाशक्ति ब्राह्मणाञ्च विसृज्य च ।
वैश्वदेवादिकं कर्म ततः कुर्यान्नराधिपः ।।

## अकरणे निन्दामाह

गौतमः-

पितृश्राद्धमकृत्वा तु वैश्वदेवं करोति यः ।
अकृतं तद्भवेदन्नं पितॄणां नोपतिष्ठते ।।

व्यासः-

जुहूयात् सर्पिषाभ्यक्तं तैलं क्षारं विवर्जितम् ।
दध्यक्तं पयसाऽक्तं वा तदभावेऽम्बुनापि वा ।।

द्रव्यानुकल्पश्चतुर्विंशतिमते दर्शितः-

अलाभे येन केनापि फलशाकोदकादिभिः ।

पयोदधिघृतैः कुर्याद्वैश्वदेव स्रुवेण तु ॥
हस्तेनान्नादिभिः कुर्यादभैरञ्जलिना जले ।

गृह्यपरिशिष्टे-

शाकं वा यदि वा पत्रं मूलं वा यदि वा फलम् ।
सङ्कल्पयेद् यदाहारस्तेनैव जुहुयादपि ॥

## परिमाणमाह

व्यासः-

आर्द्रामलकमानेन कुर्याद्होमं बहिर्वलीन् ।
प्राणाहुतिं वलिं चैव मृदुगात्र विशोधनम् ॥

बौधायनः-

शोधनं वहनं दानमुपचार प्रतिग्रहः ।
बहिर्जानुनि कार्याणि शुद्धवाचः मनस्मृतम् ॥

पराशरभाष्यम्-

उत्तानेन तु हस्तेन चाङ्गुष्ठाग्रेण पीडितम् ।
संहताङ्गुलि पाणिभ्यां वाग्यतो जुहुयाद्धविः ॥

स्कन्दपुराणे काशीखण्डे-

भूराद्याव्याहृतिस्तिस्रः स्वाहान्ताः प्रणवादिकाः ।
ॐ भूर्भुवः स्वः स्वाहेति विप्रदद्यात्तयाहुतिः ॥
तथा देवकृतस्वाहा जुहुयादेषु चाहुतिम् ।
यस्य यत्तुष्णीमेकं च तथास्विष्टकृदग्नये ॥

तद्यथा-

ॐ देवकृतस्यैनसोऽवयजनमसि स्वाहा ।
ॐ पितृकृतस्यैनसोऽवयजनमसि स्वाहा ।
ॐ मनुष्यकृतस्यैनसोऽवयजनमसि स्वाहा ।
ॐ अस्मत्कृतस्यैनसोऽवयजनमसि स्वाहा ।
ॐ यद्वाचनिकं चैनश्चकृमतस्यावयजनमसि स्वाहा ।

ॐ एनस एनसोऽवयजनमसि स्वाहा ।
ॐ अग्नये सृष्टिकृते स्वाहा ।
विश्वेभ्यश्चापि देवेभ्यो भूमौदद्याद्यथा वलिम् ।
सर्वेभ्यश्चापि भूतेभ्यो नमोदद्यात्तदुत्तरे ॥
एतद्दक्षिणे पितृभ्यः प्राचीना वीतिको दद्यात् ।
निर्णेजनोदकान्नेन ऐशान्यां यक्षमर्पयेत् ॥

अनग्निकस्य वैश्वदेव विशेषमाह-

वृद्धवसिष्ठः-

अनग्निकस्तु यो विप्रः सोऽन्नं व्याहृतिभिः स्वयम् ।
हुत्वा शाकलमन्त्रैश्च शिष्टं काकवलिं हरेत् ॥

देवकृतसैनस इत्याद्याः शाकलमन्त्राः । विष्णुरपि-

अन्नं व्याहृतिभिर्हुत्वा हुत्वा मन्त्रैश्च साकलैः ।
प्रजापतेर्हविर्हुत्वा पूजयेदतिथिं ततः ॥

भूतयज्ञः कूर्मपुराणे दर्शितः-

देवेभ्यस्तु हुतादन्नाच्छेषाद्भूतवलिं हरेत् ।
भूतयज्ञः स वै प्रोक्तो भूतिदः सर्वदेहिनाम् ॥

हारीतोऽपि-

वास्तुपालभूतेभ्यो बलिहरणं भूतयज्ञः ।

कात्यायनोऽपि-

उद्धृत्य हविषाऽऽषिच्च हविष्येण घृतादिना ।
स्वशाखाविधिना हुत्वा तच्छेषेण बलिं हरेत् ॥

## बलिदानप्रकारमाह

छन्दोगपरिशिष्टे-

अमुष्मै नम इत्येवं बलिदानं विधीयते ।
बलिदानप्रदानार्थं नमस्कारः कृतो यतः ॥
स्वधाकारेण निनयेन्नित्यं बलिमतः सदा ।

**बलीनां पूर्वापरयोः षेकमाह**

गोभिलः-

**सर्वेषामुभयोऽभिपरिषेक इति । उभयतः बलिस्थाने विल्वोपरि च ।**

**पितृबल्यभ्युक्षणानन्तरं दानमाह-**

गोभिलः-

अथैतद् दानशेषमभिसिच्चापसव्यः
पितृतीर्थेन दक्षिणानिनयेत् ।
पितृभ्यो भवती ॐ यवौतमेन बलिमतः सदा
नमस्तेऽस्तु मांसिरित्यनेन बलिदानम् ।

## काम्यबलिमाह

विष्णुपुराणम्-

स्वाध्याय गोत्रचरणमस्पृष्ट्वापि तथाकुलम् ।
हिरण्यगर्भं बुध्या च मर्च्चेदभ्यागतं गृही ॥

स्मृतिः-

देशं नाम कुलं विद्यां पृष्ट्वा योन्यं प्रयच्छति ।
न स तत्फलमाप्नोति दत्वा स्वर्गं न गच्छति ॥

शातातपः-

प्रियो वा यदि वा द्वेष्यो मूर्खः पण्डित एव वा ।
सम्प्राप्ते वैश्वदेवान्ते सोऽतिथिः स्वर्गसंक्रमः ॥

देवलः-

सायं प्रातः गृहद्वारं भिक्षार्थं नाऽवमाननम् ।

स्मृतिः-

दिवा तिथौ च विमुखे गते यत्पातकं भवेत् ।
तदेवाष्टगुणं पापं सूर्ये च विमुखे गते ॥

संन्यासिभिक्षादाने तु-

यति हस्ते जलं दद्याद्भैक्ष्यं दद्यात्पुनर्जलम् ।
तद्भैक्ष्यं मेरुणा तुल्यं तज्जलं सागरोपमम् ॥

## अथ नित्यश्राद्धम्

व्यासः-

अहन्यहनि यच्छ्राद्धं तन्नित्यमिति कीर्त्तितम् ।

मार्कण्डेयपुराणे-

कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन वा ।
पितृनुद्दिश्य विप्रांस्तु भोजयेद्विधिपूर्वकम् ॥

कूर्मपुराणे-

एकन्तु भोजयेद्विप्रं पितृनुद्दिश्य सप्तमः ।
नित्यश्राद्धं तदुद्दिष्टं पितृयज्ञो गतिप्रदः ॥

इदं षड्दैवत्यं दैवादिहीनं च । तदुक्तं पुराणे-

नित्यश्राद्धं तु यन्नाम दैवहीनं तदुच्यते ।
तत्तु षाट्पौरुषं ज्ञेयं दक्षिणापिण्डवर्जितम् ॥

प्रचेताः-

नामन्त्रणं न होमं च नाऽऽह्वानं न विसर्जनम् ।
न पिण्डदानं न सुरान्नित्ये कुर्याद्द्विजोत्तमः ॥
उपवेश्याऽऽसनं दद्यात्संपूज्य कुसुमादिभिः ।
निर्दिश्य भोजयित्वा तु किञ्चिद्दत्वा विसर्जयेत् ॥

## नित्यश्राद्धप्रकारः

मत्स्यपुराणे दर्शितः-

नित्यं तावत् प्रवक्ष्यामि अर्घ्यावाहनवर्जितम् ।
अदैवं तद् विजानीयात् पार्वणं तद्धि कीर्त्तितम् ॥

प्रचेताः-

नावाहनाग्नौकरणं न पिण्डं न विसर्ज्जनम् ।

व्यासः-

नित्यश्राद्धेऽर्घ्यगन्धाद्यैर्द्विजानभ्यर्च्च्य शक्तितः ।
सर्वान् पितृगणान् सम्यक् सहैवोद्दिश्य भोजयेत् ॥
आवाहनस्वाधाकार पिण्डाग्नौकरणादिकम् ।
ब्रह्मचर्यादिनियमो विश्वेदेवास्तथैव च ॥
नित्यश्राद्धे त्यजेदेतान् भोज्यमन्नं प्रकल्पयेत् ।
दत्वा तु दक्षिणां शक्त्या नमस्कारैर्विसर्ज्जयेत् ॥
एकमप्याशयेन्नित्यं षणामप्यन्वहं गृही ।

अत्रानुकल्पमाह कात्यायनः-

एकमप्याशयेद्विप्रं पितृयज्ञार्थसिद्धये ।
अदैवं नास्ति चेदन्नं भोक्ता भोज्यमाथापि वा ॥
अभ्युद्धृत्य यथाशक्ति किञ्चिदन्नं यथाविधि ।
पितृभ्य इदमित्युक्त्वा स्वधाकारमुदाहरेत् ॥

उद्धृतमन्नं ब्राह्मणाय दद्यात् । तदुक्तं कूर्मपुराणे-

उद्धृत्य वा यथाशक्ति किञ्चिदन्नं समाहितः ।
वेदतत्वार्थविदुषे द्विजायैवोपपादयेत् ॥

अत्राप्यसामर्थ्ये मनुनोक्तम्-

कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन वा ।
पयोमूलफलैर्वाऽपि पितृभ्यः प्रीतिमावहन् ॥

-मनुस्मृतिः ३/८२ ।

देवलः- अनेन विधिना श्राद्धं कुर्यात्संवत्सरं सकृत् ।
द्विश्चतुर्वा यथा श्राद्धं मासे मासे दिनेऽपि वा ॥

## नित्यश्राद्धाकरणे प्रायश्चित्तम्

ऋग्विधाने-

आर्चन्नत्र जपेन्मन्त्रं दशवारं जले बुधः ।
नित्यश्राद्धं यदा न्यूनं कुरुते नात्र संशयः ॥

इदं दर्शादिश्राद्धे प्राप्ते प्रसङ्गसिद्धेर्न पृथक् कार्यम् । तदुक्तं चमत्कारखण्डे-

नित्यश्राद्धं न कुर्वीत प्रसङ्गं यत्र सिध्यति ।
श्राद्धान्तरे कृतेऽन्यत्र नित्यत्वत्तन्न हापयेत् ॥

## पञ्चमहायज्ञप्रशंसा

हारीतः-

देवान् पितॄन्मनुष्यांश्च भूतानि ब्राह्मणांस्तथा ।
तर्पयन्विधिना विप्रो ब्रह्मभूयाय कल्पते ॥

शम्भुरपि-

यत्फलं सोमयागेन प्राप्नोति धनवान् द्विजः ।
सम्यक् पञ्चमहायज्ञैर्दरिद्रस्तदवाप्नुयात् ॥

## अकरणे प्रायश्चित्तम्

ऋग्विधाने-

यो त्रिंशति जपेत्सूक्तं त्रिवारं तु यदा द्विजः ।
विश्वदेवं विना भुंक्ते तदा पापात्प्रमुच्यते ॥

बौधायनस्तु-

बौधायन इदं प्राह लोपे पञ्चमखेषु तु ।
एतेभ्यः पञ्चयज्ञेभ्यो यथैकोऽपि न हीयते ॥
मनस्वत्याऽऽहुतिस्तत्र प्रायश्चित्तं विधीयते ।
द्व्यहं वाऽपि त्र्यहं वाऽपि प्रमादादकृतेषु च ।
तिस्रस्तन्तुमतीर्हुत्वा चतस्रो वारुणीं जपेत् ॥
दशाहं द्वादशाहं वा निवृत्तेषु च सर्वशः ।
चतस्रो वारुणीर्हुत्वा कार्यस्तान्तुमतश्चरुः ॥

स्मृत्यन्तरे तु-

अकृत्वाऽन्यतमं यज्ञं पञ्चानामधिकारतः ।

उपवासेन शुद्धिः स्यात्पाकसंस्थासु चैव हि ॥

अग्निः-

महायज्ञस्याकरणे विप्रमापदि भोजयेत् ।
अनापन्नस्तूपवसेद्विप्रं भक्त्या तु भोजयेत्ततः ॥

अन्यश्च-

पञ्चयज्ञस्याकरणात्स्वस्थस्तूपवसेद्विजः ।
अस्वस्थो विप्रवाक्येन पूयते गाश्च तर्पणात् ॥

कूर्मपुराणे तु-

पञ्चयज्ञानकृत्वा तु यो भुंक्ते प्रत्यहं गृही ।
अनातुरः सति धत्ते कृच्छ्रार्धेन विशुध्यति ॥

व्यासः-

पञ्चयज्ञास्तु यो मोहान्न करोति गृहाश्रमी ।
तस्य नायं न च परो लोको भवति धर्मतः ॥

## अथ गोग्रासः

तृणान्नाद्यपरा गावः कर्त्तव्या भक्तितोऽन्वहम् ।
अकृत्वा स्वयमाहारं कुर्वन् प्राप्नोति दुर्गतिम् ॥
आत्माहारप्रमाणेन प्रत्यहं गोषु दीयते ।

आत्माहारप्रमाणेऽन्नाशक्तौ ब्रह्माण्डे-

सौरेभेभ्यः सर्वहिताः पवित्राः पुण्यराशयः ।
प्रतिगृह्णन्तु मे ग्रासं गावस्त्रैलोक्यमातरः ॥
दद्यादनेन मन्त्रेण गवां ग्रासं सदैव हि ।

प्रभासखण्डे मन्त्रोत्तरमुक्तम्-

सौरभेयी जगत्पूज्या देवी विष्णुपदे स्थिता ।
सर्वदेवमयी ग्रासः मया दत्तः प्रगृह्णतु ॥

काम्यं च-

तृणोदकेन संयुक्तं यः प्रदद्याद्गवाह्निकम् ।

कपिलाशतदानस्य फलं विद्यान्न संशयः ॥

## प्रसङ्गादन्नदानस्य फलमाह

व्यासः-

ग्रासमप्येकमन्नस्य यो ददाति दिने दिने ।
स्वर्गलोकमवाप्नोति नरकं न च गच्छति ॥
द्वाविमौ पुरुषौ लोके सूर्यस्योपरि तिष्ठतः ।
अन्नप्रदाता दुर्भिक्षे सुभिक्षे हेमवस्त्रदः ॥
अश्वमेधविधानेन यत्पुण्यफलमाप्यते ।
तेन तुल्यं विशिष्टं वा ब्राह्मणे तर्पिते फलम् ॥

विष्णुः-

कृत्वा हि पापकं कर्म यो दद्यादन्नमर्थिने ।
ब्राह्मणाय विशेषेण न स पापेन युज्यते ॥

ब्रह्मवैवर्त्तेऽपि-

अन्नं प्रजापतिः साक्षादन्नं विष्णुः शिवः स्वयम् ।
तस्मादन्नसमं दानं न भूतं न भविष्यति ॥

वृहन्नारदीये-

भ्रूणहाऽप्यन्नदानेन शुद्धो भवति भूपते ।
अन्नतोयसमं दानं न भूतं न भविष्यति ॥

## अथ भोजनम्

व्यासः-

पञ्चार्द्रो भोजनं कुर्यात् प्राङ्मुखो मौनमस्थितः ।
हस्तौ पादौ तथैवास्यमेषु पञ्चार्द्रता मता ॥

अश्वमेधिकेऽपि-

आर्द्रपादस्तु भुञ्जीयात् प्राङ्मुखोश्चासने शुचौ ।
पादाभ्यां धरणीं स्पृष्ट्वा पादेनैकेन वा पुनः ॥

बौधायनः-

उपलिप्ते समे स्थाने शुचौ श्लक्ष्णासमन्विते ।
चतुरस्रं त्रिकोणं वा वर्त्तुतं चार्धचन्द्रकम् ॥
कर्त्तव्यमानुपूर्वेण ब्राह्मणादिषु मण्डलम् ।

शङ्खः-

आदित्यावसवो रुद्रः ब्रह्मा चैव पितामहः ।
मण्डलान्युपजीवन्ति तस्मात् कुर्वीत मण्डलम् ॥

विष्णुपुराणे-

ततः सुवासिनी दुःखिगर्भिणी वृद्ध-बालकान् ।
भोजयेत् संस्कृतान्नेन प्रथमन्तु परं गृही ॥
अभुक्तवत्सु चैतेषु भुञ्जन् भुंक्ते सुदुष्कृतम् ।
मृतश्च गत्वा नरकं श्लेष्मभुग् जायते नृपः ॥

मार्कण्डेयपुराणे-

पूजयित्वाऽतिथीन्निस्वान् ज्ञातीन् बन्धुंस्तथाऽर्थिनः ।
विकलान् बालबृद्धांश्च भोजयेदातुरांस्ततः ॥
वाञ्छेत् क्षुत्तुट्परीक्षात्मा यच्चान्नं रससंयुतम् ।

कूर्मपराणे-

उपलिप्ते शुचौ देशे पादौ प्रक्षाल्य वै करौ ।
आचम्यार्द्रानक्रोधः पञ्चार्द्रो भोजनञ्चरेत् ॥

आचारार्के मनुः-

सायं प्रातर्दिजातीनामशनं श्रुतिचोदितम् ।
नान्तरा भोजनं कार्यमग्निहोत्रसमो विधिः ॥

आचारार्केऽपि-

आयुष्मान् प्राङ्मुखो भुंक्ते यशस्वी दक्षिणामुखः ।
धनवान् पश्चिमायां तु धर्मवानुत्तरामुखः ॥

मनुः- आयुष्यं प्राङ्मुखो भुंक्ते यशस्य दक्षिणामुखः ।
श्रियं प्रत्यङ्मुखो भुंक्ते ऋतं भुंक्ते ह्युदङ्मुखः ॥

उपस्पृश्य द्विजो नित्यमन्नमद्यात्समाहितः ।
भुक्त्वा चोपस्पृशेत्सम्यगद्भिः खानि च संस्पृशेत् ॥
पूजयेदशनं नित्यमद्याच्चैतदकुत्सयन् ।
दृष्ट्वा हृष्येत्प्रसीदेच्च प्रतिनन्देच्च सर्वशः ॥
पूजितं ह्यशनं नित्यं बलमूर्जं च यच्छति ।
अपूजितं तु तद् भुक्तमुभयं नाशयेदिदम् ॥

-मनुस्मृतिः २/५२-५५ ।

माधवीये मनुः-

भुक्तवत्सु तु विप्रेषु स्वेषु भृत्येषु चैव हि ।
भुञ्जीयातां ततः पश्चादवशिष्टं तु दम्पती ॥

धर्मप्रश्नेऽपि-

प्राङ्मुखोऽन्नानि भुञ्जीत ।

माधवीये आश्वमेधिके-

आर्द्रपादस्तु भुञ्जीयात्प्राङ्मुखश्चाऽऽसने शुचौ ।
पादाभ्यां धरणीं स्पृष्ट्वा पादेनेकेन वा पुनः ॥

मनुः- भुक्तवत्स्वथ विप्रेषु स्वेषु भृत्येषु चैव हि ।
भुञ्जीयातां ततः पश्चादवशिष्टन्तु दम्यती ॥

-मनुस्मृतिः ३/११६ ।

याज्ञवल्क्यः-

बालः सवासिनीबृद्धगर्भिण्यातुरकन्यकाः[१८] ।
संभोज्यातिथिभृत्यांश्च दम्पत्योः शेषभोजनम् ॥

---

१८. परिणीता पितृगृहे स्थिता स्ववासिनी ।
कन्यका दशवर्षवयस्का दुहिता कन्या ॥

-याज्ञवल्क्यस्मृतिः १/१०५ ।

कन्यात्वजातोपयसा सलज्जा नवयौवना ॥ इति । -साहित्यदर्पणे ।
अष्टवर्षा भवेद्गौरी नववर्षा च रोहिणी ।
दशवर्षा भवेत् कन्या अत ऊर्ध्वं रजस्वला ॥ इति स्मृतिः ।

## एकपङ्क्तौ भोजनप्रकारमाह

गोभिलः-

एकपङ्क्त्युपविष्टानां विप्राणां सह भोजने ।
यथैकोऽपि त्यजेत् पात्रं नाश्नीयुरितरे पुनः ॥
मोहात्तु भुङ्क्ते यस्तत्र स सान्तपनमाचरेत् ।
भुञ्जानेषु तु विप्रेषु यस्तु पात्रं परित्यजेत् ॥
भोजने विघ्नकर्त्ताऽसौ ब्रह्महाऽपि तथोच्यते ।

बृहस्पतिः-

अप्येकपङ्क्त्या नाश्नीया द्ब्राह्मणैः स्वजनैरपि ।
को हि जानाति किं कस्य प्रच्छन्नं पातकं भवेत् ॥
एकपङ्क्त्युपविष्टानां दुष्कृतं यद्दुरात्मनाम् ।
सर्वेषां तत्समं तावद् यावत् पङ्क्तिर्न भिद्यते ॥
अग्निना भस्मना चैव स्तम्भेन सलिलेन च ।
द्वारेणैव च मार्गेण पङ्क्तिभेदो बुधैः स्मृतः ॥

पराशरः-

यो वेष्टितशिरा भुङ्क्ते यो भुङ्क्ते दक्षिणामुखः ।
वामपादकरः स्थित्वा तद्वै रक्षांसि भुञ्जते ॥

## भोजनं शुद्धपात्रे कर्त्तव्यम्

तदुक्तं कूर्मपुराणे-

प्रशस्त शुद्धपात्रेषु भुञ्जीताकुत्सिते द्विजः ।

पैठीनसि-

सौवर्णे राजते ताम्रे यमपत्रपलाशयोः ।
भोजने भोजने चैव त्रिरात्रफलमश्नुते ॥
एक एव तु यो भुङ्क्ते विमले कांस्यभाजने ।
चत्वारि तस्य वर्द्धन्ते आयुः प्रज्ञा यशोबलम् ॥

तत्र यमपत्र-पलाशपत्रभोजनम् गृहीव्यतिरिक्तविषयम् ।

**पलाश-यम-पत्रेषु गृही भुक्त्वैन्दवं चरेत् ।**
**ब्रह्मचारि-यतीनाञ्च चान्द्रायणफलं भवेत् ॥**

इति व्यासस्मरणात् । कांस्यपात्रं गृहिमात्रपरम् । तदाह प्रचेताः-

**ताम्बुलाभ्यञ्जनं चैव कांस्यपात्रे च भोजनम् ।**
**यतिश्च ब्रह्मचारी च विधवा च विवर्जयेत् ॥**

तच्च पात्रं भूमौ स्थापनीयम् । यदुक्तं कूर्मपुराणे-

**पञ्चादौ भोजनं कुर्याद् भूमौ पात्रं निधाय तु ।**
**उपवासेन तत्तुल्यं मनुराह प्रजापतिः ॥**

तच्च स्थापनं प्राणाहुतिपर्यन्तम् । पश्चात्तु यन्त्रादौ स्थाप्यम् ।

**न्यस्तपात्रस्तु भुञ्जीत पञ्चग्रासान् महामुने ।**
**शेषमुद्धृत्य भोक्तव्यं श्रुयतामत्र कारणम् ॥**
**विप्रुषां पादसंस्पर्शः पादचैलरजस्तथा ।**
**सुखेन भुङ्क्ते विप्रो हि पित्र्यर्थन्तु न लुप्यते ॥**

तथा च ब्रह्मपुराणे-

**पित्र्ये कर्मणि भुञ्जानो भूमौ पात्रं न चालयेत् ।**
**अन्नं दृष्ट्वा प्रणम्यादौ प्राञ्जलिः कथयेत्ततः ।**
**अस्माकं नित्यमस्त्वेतदिति भक्त्याथ वन्दयेत् ॥**

तदनन्तरं कृत्यमुक्तं भविष्यपुराणे-

**भोजनात् किञ्चिदनाग्रं धर्मराजाय वै वलिम् ।**
**दत्वाऽथ चित्रगुप्ताय प्रेतेभ्यश्चेदमुच्चरेत् ॥**
**यत्र क्वचन संस्थानां क्षुत्तृष्णोपहतात्मनाम् ।**
**प्रेतानां तृप्तयेऽक्षप्यमिदमस्तु यथासुखम् ॥**

प्राणाहुतिष्वङ्गुलिनियममाह-

शौनकः-

**स्वाहान्ताः प्रणवायाश्च नाम्ना मन्त्राश्च वायवः ।**
**तर्जतीमध्यमाङ्गुष्ठलग्ना प्राणाहुतिर्भवेत् ॥**

मध्यमाऽनामिकाऽङ्गुष्ठैरपाने जुहुयात्ततः ।
कनिष्ठानामिकाङ्गुष्ठै र्व्याने च जुहुयात्ततः ॥
तर्जनीं तु बहिः कृत्वा उदाने जुहुयाद्धविः ।
समाने सर्वहस्तेन समुदायाहुतिर्भवेत् ॥
जिह्वयैव ग्रसेदन्नं दशनेन न संस्पृशेत् ।

कूर्मपुराणे -

महाव्याहृतिस्त्वन्नं च परिधायोदकेन तु ।
अमृतोपस्तरणमसीत्यापोशामक्रियां चरेत् ॥

जिह्वाग्रासेन च विशेष उक्त आश्वमेधिके -

यथा रसं न जानाति जिह्वा प्राणाहुतो नृप ।
तथा समाहितः कुर्यात्प्राणाहुतिमतन्द्रितः ॥

विष्णुपुराणे -

अश्नीयात्तन्मनो भूत्वा भुञ्जीतमधुरं रसम् ।
लवणाम्लौ तथा मध्ये कटुतिक्तादिकांस्ततः ॥
प्राग्द्रवं पुरुषोऽश्नीयान्मध्ये च कठिनाशनः ।
अन्ते पुनर्द्रवाशी तु बलारोग्यैर्न मुञ्चति ॥

भोजने संख्यामाह -

आपस्तम्बः -

अष्टौ ग्रासाः मुनेर्भक्ष्या षोडशारण्यवासिनः ।
द्वात्रिंशत्तु गृहस्थस्य ह्यमितं ब्रह्मचारिणः ॥

आश्वमेधिकेऽपि -

वक्त्रप्रमाणपिण्डाश्च ग्रसेदेकैकशः पुनः ।
वक्त्राधिकन्तु यत् पिण्डमात्मोच्छिष्टं तदुच्यते ॥
पिण्डावशिष्टमन्नञ्च वक्त्रनिसृतमेव च ।
अभोज्यं तद्विजानीयात् भुक्त्वा चान्द्रायणं चरेत् ॥
सदा चात्यशनं नाद्यात् नातिहीनं न कर्हिचित् ।
यथाऽन्नेन व्यथा न स्यात् तथा भुञ्जीत नित्यशः ॥

बृद्धमनुः-

पीत्वाऽपोऽशनमश्नीयात् पात्रदत्तमगर्हितम् ।
भार्या-भृतक-दासेभ्य उच्छिष्टं शेवयेत् द्विजः ॥

उच्छिष्टशेषणन्तु घृतादिव्यतिरिक्तविषयम् ।

तदाह पुलस्त्यः-

भोजनन्तु न निःशेषं कुर्यात् प्राज्ञः कथञ्चन ।
अन्यत्र दधिसक्त्वाज्यपललक्षीरमध्वपः ॥

वर्ज्यान्तराणामप्युपलक्षणम् । तानि च ब्रह्मपुराणे-

यत्तु पाणितले भुङ्क्ते यच्च फूत्कारसंयुतम् ।
प्रसृताङ्गुलिभिश्च तस्य गोमांसवच्च तत् ॥
नाजीर्णे भोजनं कुर्यात्कुर्यान्नातिबुभुक्षितः ।
नार्द्रवासा नार्द्रशिरा देवालयगतोऽथवा ॥
न प्रसादितपादस्तु पादरोपितपाणिमान् ।
न वेष्टितशिरश्चापि नोत्सङ्गकृतभाजनः ॥
ग्रासशेषं न चाश्नीयात् पाणीशेषं पिबेन्न च ।
शाकमूलफलेक्षूणां दन्तच्छेदैर्न भक्षयेत् ॥
बहूनां भुञ्जता मध्ये नाश्नीयाच्च त्वरान्वितम् ।
वृथा न विकिरेदन्नं नोच्छिष्टश्च क्वचिद् ब्रजेत् ॥

बृहस्पतिः-

न स्पृशेद्वामहस्तेन भुञ्जानोऽन्नं कदाचन ।
न पादौ न शिरोवस्ति न पदा भाजनं स्पृशेत् ॥

कूर्मपुराणे-

नार्द्धरात्रे न मध्याह्ने नाजीर्णे नार्द्रवस्त्रधृक् ।
न भिन्नभाजने चाद्यात् न भूम्यां न च पाणिना ॥
नोच्छिष्टो घृतमादद्यान्न मूर्द्धानं स्पृशन्नपि ।
न ब्रह्म कीर्त्तयित्वाऽपि न निःशेषं न भार्यया ॥
नान्यागारे न वाऽकाशे न च देवालयादिषु ।

आदित्यपुराणे-

नोच्छिष्टं गाहयेदाज्यं दग्धशिष्टं च सन्त्यजेत् ।
शूद्र भुक्तावशिष्टन्तु नाद्याद्भाण्डस्थितं त्वपि ॥

याज्ञवल्क्योऽपि-

न भार्यया सहाश्नीयान्नैकवासा न संस्थितः ।

यत्तु-

ब्राह्मण्या सह योऽश्नीयादुच्छिष्ट वा कदाचन ।
न तस्य दोषमिच्छन्ति नित्यमेव मनीषिणः ॥
स्त्रीणामुच्छिष्टं योऽश्नीयाद् ब्राह्मणः वेदपारगः ।
प्रायश्चित्ती स विज्ञेयः संकीर्णो मूढचेतनः ॥

बृद्धमनुरपि-

न पिबेन्न च भुञ्जीत द्विजः सव्येन पाणिना ।
नैकहस्तेन च जलं शूद्रेणावर्जितं पिबेत् ॥
पिबतो यत् पतेतोयं भाजने मुखनिःसृतम् ।
अभोज्यं तद्भवेदन्नं भुक्त्वा भुञ्जीत किल्विषम् ॥
पीतावशेषितं तोयं ब्राह्मणः न पुनः पिबेत् ।
पिबेद्यदि हि तन्मोहात् द्विजश्चान्द्रायणं चरेत् ॥

अत्रिः-

तोयं पाणिनखस्पृष्टं ब्राह्मणो न पिबेत् क्वचित् ।
सुरापानेन तत्तुल्यमित्येवं मनुरब्रवीत् ॥
उद्धृत्य वामहस्तेन यत्तोयं पिबति द्विजः ।
सुरापानेन तत्तुल्यं मनुराह प्रजापतिः ॥

## अथ शयनं

विष्णुपुराणम्-

प्राच्यां दिशि शिरः शस्तं याम्यामथवा नृप ।
सदैव स्वपतः पुंसो वीपरीतन्तु रोगदम् ॥

गार्ग्यो-

स्वगेहे प्राक्शिराः शेते श्वाशुर्ये दक्षिणाशिराः ।
प्रत्यक्शिराः प्रवासे तु नकदाचिदुदक्शिराः ।।

पुराणेऽपि-

रात्रिसूक्तं जपेत् स्मृत्वा सर्वांश्च सुखशायिनः ।
नमस्कृत्वाऽव्ययं विष्णुं समाधीस्थः स्वपेन्निशि ।।

सुखशायिनोऽपि गालवेन दर्शिता-

अगस्तिमाधवश्चैव मुचुकुन्दो महामुनिः ।
कपिलो मुनिरास्तिकः पञ्चैते सुखशायिनः ।।

## शयने वर्जनीयानाह

मार्कण्डेयः-

शून्यालये श्मशाने च एकवृक्षे चतुष्पथे ।
महादेवगृहे वाऽपि मातृवाऽश्मनि न स्वपेत् ।।
न यक्ष नागायतने स्कन्दस्यायतने तथा ।
कूलच्छायासु च तथा शर्करा-लोष्ट-पांशुषु ।।
न स्वपेच्च तथा गर्त्ते विना दीक्षां कथञ्चन ।
धान्य-गो-विप्र-देवानां गुरुणाञ्च तथोपरि ।।
न चापि भग्नशयने नाशुचौ नाशुचिः स्वयम् ।
नार्द्रवासा न नग्नश्च नोत्तरा-स्थितमस्तकः ।।
नाकाशे सर्वशून्ये च न च चेत्यद्रुमे तथा ।

विष्णुपुराणे-

कृतपात्रादि शौचस्तु भुक्त्वा सायं ततो गृही ।
गच्छेद् स्फुटितां शर्यामपि दारुमयीं नृप ।।
न विशालां न वै भग्नां नासमां मलिनां न च ।
न च जन्तुमयीं शय्यामधितिष्ठेदनास्तृताम् ।।
प्राच्यां दिशि शिरः शस्त याम्यायामथवा नृप ।
सदैव स्वपतः पुंसो विपरीतं तु रोगदम् ।।

नन्दीपुराणे-

नमो नन्दीश्वराय च प्रोक्त्वा वै सुप्यते नरः ।
तस्य कूष्माण्डराजभ्यो न भविष्यति वै भयम् ॥

हारीतः-

नाश्मपीठोपधाने नतिर्यगुदकप्रत्यक् शिरा ।
न नग्नो नाशुचिर्न चासने नोच्छिष्टो न प्रगे ॥

उशना-

न तैले नाभ्यक्तशिराः स्वपेन्नादीक्षितः कृष्णचर्मणि ।

आपस्तम्बः-

सदा निशायां दारान्प्रत्यलंकुर्वीतेति ।

नारदशङ्खश्च-

नार्द्रपादश्च सुप्यान्नोत्तरापराशिरा न च ।
न नग्नो नानुवंशं नाकाशे न पलाशयने ।
न पञ्चदारुकृते न भग्नकृते न विद्युदग्धे ॥

हारीतः-

न सन्धिवेलायां शयीत न नग्नो नाशुचि-
र्न प्रगे नोच्चैर्निशायां भाषितेति ।

पुनश्च-

न प्रत्यक्तिर्यगुदक्शिरः कोणशिराः
पश्चिमशिरा उत्तरशिराश्चेति ।

मार्कण्डेये-

प्राक्शिरः शयने विद्याद्धनमायुश्चदक्षिणे ।
पश्चिमे प्रबला चिन्ताहानि मृत्युतथोत्तरे ॥

## ऋतौ नियमः

याज्ञवल्क्यः-

षोडशर्तु निशाः स्त्रीणां तस्मिन्युग्माशु संविशेत् ।

ब्रह्मचार्येव पर्वाण्यायाश्चतस्रस्तु वर्जयेत् ॥[१९]
यथाकामी भवेद्वापि स्त्रीणां वरमनुस्मरन् ।

मनुः-

ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोडश स्मृताः ।
चतुर्भिरितरैः सार्धमहोभिः सद्विगर्हितैः ॥
तासामाद्यश्चतस्रस्तु निन्दितेकादशी च या ।
त्रयोदशी च शेषास्तु प्रशस्ता दशरात्रयः ॥

-मनुस्मृतिः (३/४६-४७)।

अमावास्यामष्टमीं च पौर्णमासी चतुर्दशीम् ।
ब्रह्मचारी भवेन्नित्यमप्यृतौ स्नातको द्विजः ॥

- मनुस्मृतिः (४/२८) ।

## अथ श्राद्धम्[२०]

विश्वामित्रः-

नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं सपिण्डनम् ।
पार्वणं चेति विज्ञेयं गोष्ठ्यां शुद्ध्यर्थमष्टमम् ॥

---

१९. स्त्रीणां गर्भधारणयोग्यावस्थोपलक्षितः कालः ऋतुः । स च रजोदर्शनदिवसादारभ्य षोडशाहोरात्र तस्मिन् ऋतौ युग्मासु समासु रात्रिषु। रात्रिग्रहणाद् दिवसप्रतिषेधः । संविशेत् गच्छेत् पुत्रार्थम् । युग्मासु इति बहुवचनं समुचयार्थम् । अतश्चैकस्मिन्नपि ऋतौ अप्रतिषिद्धासु युग्मासु सर्वासु रात्रिषु गच्छेत् । एवं गच्छन् ब्रह्मचार्येव भवति ।

-मिता. याज्ञवल्क्यस्मृतिः (१/७९) ।

२०. श्राद्धं नामादनीयस्य तत्स्थानीयस्य वा द्रव्यस्य प्रेतोद्देशेन श्रद्धया त्यागः। तच्च (श्राद्धं) द्विविधं- पार्वणमेकोदिष्टं चेति । तत्र त्रिपुरुषोद्देशेन यत्क्रियते तत्पार्वणम् । एकपुरुषोद्देशेन क्रियमाणमेकोद्दिष्टम् । पुनश्च त्रिविधं- नित्यं नैमित्तिकं काम्यं चेति । तत्र नित्यं नियतनिमित्तोपाधौ चोदितमहरहरमावास्याष्टकादिषु । अनियतनिमित्तोपाधौ चोदितं नैमित्तिकं यथा पुत्रजन्मादिषु । फलकामनोपाधौ विहितं काम्यं यथा

कर्माङ्गं नवमं प्रोक्तं दैविकं दशमं स्मृतम् ।
यात्रास्वेकादशं प्रोक्तं पुष्ट्यर्थं द्वादशं स्मृतम् ॥

भविष्यपुराणे-

अहन्यहनि यच्छ्राद्धं तन्नित्यमिति कीर्त्तितम् ।
वैश्वदेवविहीनं तदशक्तावुदकेन तु ॥
एकोदिष्टं तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते ।
तदप्यदैवकं कार्यमयुग्मान् भोजयेद् द्विजान् ॥
कामाय विहितं काम्यञ्चाभिप्रेतार्थसिद्धये ।
पार्वणेन विधानेन तदप्युक्तं नराधिपः ॥
वृद्धौ यत् क्रियते श्राद्धं वृद्धिश्राद्धं तदुच्यते ।
सर्वं प्रदक्षिणं कार्यं पूर्वाह्णे तूपवीतिना ॥
गन्धोदकतिलैर्युक्तं कुर्यात् पात्रचतुष्टयम् ।
अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत् ॥
ये समाना इति द्वाभ्यामेतज्ज्ञेयं सपिण्डनम् ।
नित्येन तुल्यं शेषं स्यादेकोद्दिष्टं स्त्रिया अपि ॥
अमावास्यायां यत् क्रियते तत् पार्वणमुदाहृतम् ।
क्रियते वा पर्वणि यत् तत्पार्वणमुदाहृतम् ॥
गोष्ठ्यां क्रियते श्राद्धं गोष्ठीश्राद्धं तदुच्यते ।
बहूनां विदुषां सम्पत्सुखार्थं पितृतृप्यते ॥
क्रियते शुद्धये यत्तद् ब्राह्मणानां तु भोजनम् ।
शुद्ध्यर्थमिति तत्प्रोक्तं वैतनेय मनीषिभिः ॥
निषेककाले सोमे च सीमन्तोन्नयने तथा ।
ज्ञेयं पुंसवने चैव श्राद्धं कर्माङ्गमेव च ॥
देवानुद्दिश्य यच्छ्राद्धं तद्दैविकमिहोच्यते ।

---

स्वार्गादिकामानां कृत्तिकादिनक्षत्रेषु तिथिषु च । पुनश्च पञ्चविधम्-
अहरहः श्राद्धं पार्वणं वृद्धिश्राद्धमेकोद्दिष्टं सपिण्डीकरणं चेति ।

हविष्येण विशिष्टेन सप्तम्यादिषु यत्नतः ॥
गच्छन्देशान्तरं यस्तु श्राद्धं कुर्यात्तु सर्पिषा ।
यात्रार्थमिति तत्प्रोक्तं प्रवेशे च न संशयः ॥
शरीरोपचये श्राद्धमर्थोपचय एव च ।
पुष्ट्यर्थमेतद्धि ज्ञेयमौपचारिकमेव वा ॥

## श्राद्धकालाः

याज्ञवल्क्यः-

[21]अमावास्याऽष्टका वृद्धिः कृष्णपक्षेऽयनद्वयम् ।
द्रव्यं ब्राह्मणसंपत्तिर्विषुवत् सूर्यसंक्रमः[22] ॥
[23]व्यतीपातो [24]गजच्छाया ग्रहणं चन्द्रसूर्ययोः ।
श्राद्धं प्रतिरुचिश्चैते श्राद्धकालाः प्रकीर्त्तिताः ॥
-याज्ञवल्क्यस्मृतिः (१/२१७-२१८) ।

मनुः-

पितृयज्ञं तु निर्वर्त्य विप्रश्चन्द्रक्षयेऽग्निमान् ।
पिण्डान्वाहार्यकं श्राद्धं कुर्यान्मासानुमासिकम् ॥

---

२१. यत्र दिने चन्द्रमा न दृश्यते सा अमावास्या । अमावास्यादयः श्राद्धस्याङ्गभूताः कालाः मन्वादिभिः प्रकीर्त्तिताः । अत्रामावास्या कृष्णपक्षस्य पञ्चदशी तिथिः । सा द्विविधा । सिनिवासीकुहूश्चेति । "दृष्टचन्द्रा सिनीवाली नष्टचन्द्रा कुहूस्तथा ।" 'अष्टका' मार्गशीर्षादिमासत्रयापरपक्षाष्टम्यः । तत्र गृह्यकृच्छ्रे शौनकः- "हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टकाः ।"

२२. सूर्यसंक्रमः आदित्यस्य राशेः राश्यन्तरगमनम् ।

२३. व्यतीपातो योगविशेषः । स च "श्रवणाश्विधनिष्ठार्द्रानागदैवतमस्तके । यद्यमा रविवारेण व्यतीपातः स उच्यते ।" इत्यादावुक्तः ।

२४. गजच्छाया-

यदीन्दुः पितृदैवत्ये हंसश्चैव करे स्थितः ।
यस्यां तिथिर्भवेत्सा हि गजच्छाया प्रकीर्त्तिता ॥

पितृणां मासिकं श्राद्धमन्वाहार्य विदुर्बुधा ।
तच्चामिषेण कर्त्तव्यं प्रशस्तेन प्रयत्नतः ॥

मनुस्मृतिः (३/१२२-१२३) ।

कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम् ।
श्राद्धे प्रशस्तास्तिथयो यथैका न तथोत्तराः ॥
यथा चैवापरः पक्षः पूर्वपक्षाद्विशिष्यते ।
तथा श्राद्धस्य पूर्वाह्णादपराह्णो विशिष्यते ॥

ब्रह्मपुराणे-

पयोमूलफलैः शाकैः कृष्णपक्षे च सर्वदा ।
पराधीनः प्रवासी वा निर्धनो वापि मानवः ॥
मनसा भावशुद्धेन श्रेद्धे दद्यात्तिलोदकम् ।
नाश्नन्ति पितरश्चेति कृत्वा हव्यमले तु यः ॥
न तर्पयति तान् भक्त्या देहस्तद्रुधिरं बलम् ।
पिबन्ति सर्वनाशं च कुर्वन्त्यनु पदे पदे ॥
तस्माद्यत्नेन च पितरं तर्पयेत् सततं बुधः ।

यमः-

पक्षान्ते निर्वपेत्तेभ्यो अपराह्णे च वेदवित् ।
अपां समीपे दुर्वासु दर्भेषु सिकतासु च ॥

ब्रह्मपुराणे-

अमावास्यायां श्रवणं रक्षोघ्नं वैष्णवं यदा ।
तदा नितृभ्यः श्राद्धं तु दत्तमक्षयमुच्यते ॥

विष्णुपुराणे-

अमावास्या यदा मैत्रविशाखास्वातीयोगिनी ।
श्राद्धे पितृगणस्तृप्तिं प्राप्नुयादष्टवार्षिकम् ॥
अमावास्या यदा पुष्ये रौद्रे चर्क्षे पुनर्वसो ।
द्वादशाब्दं तदा तृप्तिं प्रयान्ति पितरोऽर्चिता ॥

मनुः-

रात्रौ श्राद्धं न कुर्वीत राक्षसी कीर्त्तिता हि सा ।
सन्ध्ययोरुभयोश्चैव सूर्ये चैवाचिरोदिते ॥
अनेन विधिना श्राद्धं त्रिरब्दस्येह निर्वपेत् ।
हेमन्तग्रीष्मवर्षासु पाञ्चयज्ञिकमन्वहम् ॥
न पैतृकयज्ञिको होमो लौकिकेऽग्नौ विधीयते ।
न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मनः ॥

-मनुस्मृतिः ३/२८०-२८२ ।

शातातपः-

रात्रौ श्राद्धं न कुर्वीत राहोरन्यत्र दर्शनात् ।
सन्ध्ययोरुभयोश्चैव न कुर्वीत कदाचन ॥

## अथ श्राद्धदेशाः

शङ्खः-

यद्ददाति गयास्थश्च प्रभासे पुष्करेषु च ।
प्रयागे नैमिषारण्ये सर्वमानन्त्यमुच्यते ॥
गङ्गायमुनयोस्तीरे पयोष्ण्यमरकण्टके ।
नर्मदाबाहुदातीरे सर्वमानन्त्यमुच्यते ॥
कुरुणां च कुरुक्षेत्रे भृगुतुङ्गे हिमालये ।
सप्तर्षे वृष्णिकूपे च दत्तमक्षयमुच्यते ॥

देवलः-

श्राद्धस्य पूजितो देशो गया गङ्गा सरस्वती ।
कुरुक्षेत्रं प्रयागश्च नैमिषं पुष्कराणि च ॥
नदीतटेषु तीर्थेषु शैलेषु पुलिनेषु च ।
विविक्तेषु च तुष्यन्ति दत्तेनेह पितामहः ॥

मत्स्यपुराणे-

कृतशौचं महापुण्यं सर्वपापनिषूदनम् ।

यत्रास्ते नारसिंहस्तु स्वयमेव जनार्दनः ॥
तीर्थभिक्षुमती नाम पितॄणां दुर्लभं सदा ।
सङ्गमे यत्र तिष्ठन्ति गङ्गायाः पितरस्तदा ॥
यमुना देविका काली चन्द्रभागा दृशद्वती ।
नदी धेनुमती पुण्या परा वेत्रवती तथा ॥

-मत्स्यपुराणे २२/१६,१७,२० ।

तथा-

नीलकुण्डमिति ख्यातं पितृतीर्थे द्विजोत्तमाः ।
तथा भद्रसरः पुण्यं सरो मानसमेव च ॥
मन्दाकिनी तथाऽच्छोदा विपाशा च सरस्वती ।
तीर्थ मित्रपदं तद्वत् वेद्यनाथं महाफलम् ॥

-मत्स्यपुराणे २२/२२-२३ ।

तथा-

एषु तीर्थेषु यच्छ्राद्धं तत्कोटिगुणमिष्यते ।
तस्मात्तत्र प्रयत्नेन तीर्थे श्राद्धं समाचरेत् ॥

-मत्स्यपुराणे २२/८१ ।

तथा-

कुर्याच्छ्राद्धमपैतेषु नित्यमेव यथाविधि ।
प्रागदक्षिणदिशे गत्वा सर्वकामचिकीर्षया ॥

## श्राद्धे वर्ज्याः

मनुः-

न श्राद्धे भोजयेन्मित्रं धनैः कार्योऽस्य संग्रहः ।
पारिं न मित्रं च विद्यात् तं श्राद्धे भोजयेद् द्विजम् ॥
यस्य मित्रप्रधानानि श्राद्धानि च हवींषि च ।
तस्य प्रेत्य फलं नास्ति श्राद्धेषु च हविःषु च ॥
य सङ्गतानि कुरुते मोहाच्छ्राद्धेन मानवः ।

स स्वर्गाच्च्यवते लोकाच्छ्राद्धमित्रो द्विजाधमः ॥

तथा-

कामं श्राद्धेऽर्च्चयेन्मित्रं नाभिरुपमपित्वरिम् ।
द्विषताहि हविर्भुक्तं भवति प्रेत्य निष्फलम् ॥

-मनुस्मृतिः ३/१३८-१४०, १४४ ।

वसिष्ठः-

विद्वद्भोज्यान्यविद्वांसो येषु श्राद्धानि भुञ्जते ।
तान्यनावृष्टिमृच्छन्ति महद्वा जायते भयम् ॥

याज्ञवल्क्यः-

रोगी हीनातिरिक्ताङ्गः काणः पौनर्भवस्तथा ।
अवकीर्णी कुण्डगोलौ कुनखी श्यावदन्तकः ॥
भृतकाध्यापकः क्लीवः कन्यादूष्यभिशस्तकः ।
मित्रधृक् पिशुनः सोमविक्रयी परनिन्दकः ॥
मातापितृगुरुत्यागी कुण्डाशी वृषलात्मजः ।
परपूर्वापतिः स्तेन कर्मदुष्टाश्च निन्दिताः ॥

-याज्ञवल्क्यस्मृतिः १/२२२-२२४ ।

उशना-

यथार्थहेतोः पतितानादिष्टान् मनुरब्रवीत् ।
वेदविक्रयिणो ह्येते नैव श्राद्धेषु भाजयेत् ॥

मनुः-

ब्राह्मणस्त्वनधीयानस्तृणाग्निरिव शाम्यति ।
तस्मै हव्यं न दातव्यं न हि भस्मनि हूयते ॥

-मनुस्मृतिः ३/१६८ ।

तथा-

यथारिणे वीजमुप्त्वा न वप्ता लभते फलम् ।
तथाऽनृचे हविर्दत्वा न दाता लभते फलम् ॥

-मनुस्मृतिः ३/१४२ ।

# अथ श्राद्धसम्पदः

मनुः-

अपराह्णस्तथा दर्भा वास्तुसम्पादनं तिलाः ।
सृष्टिमृष्टिद्विजाश्चाग्रया श्राद्धकर्मसु सम्पदः ॥
दर्भाः पवित्रं पूर्वाह्णो हविष्याणि च सर्वशः ।
पवित्रं यच्च पूर्वोक्तं विज्ञेया हव्यसम्पदः ॥

-मनुस्मृतिः ३/२५५-२५६ ।

याज्ञवल्क्यः-

कर्मनिष्ठास्तपोनिष्ठाः पञ्चाग्निब्रह्मचारिणः ।
पितृमातृपराश्चैव ब्राह्मणाः श्राद्धसम्पदः ॥

-याज्ञवल्क्यस्मृतिः १/२२१ ।

देवलः-

दर्भास्तिला गजच्छाया दौहित्रो मधुसर्पिषी ।
कुतपो नीलकण्ठश्च पवित्राणीह पैतृके ॥

वायुपुराणे-

कृष्णाजिनस्य सान्निध्यं दर्शनं दानमेव च ।
रक्षोघ्नं ब्रह्मवर्चस्य पशून् पुत्रांश्च दापयेत् ॥

हारीतः-

दर्भैरद्भिस्तिलैर्दत्तं तुष्णीमप्याप्नुते दिवम् ।
विधिना त्वानुपूर्व्येण त्वक्षयं परिकल्पते ॥

यमः-

रक्षन्ति दर्भा असुराः तिला रक्षन्ति राक्षसाः ।
वेदविद्रक्षति त्वन्नं यतये दत्तमक्षयम् ॥

हारीतः-

तिलाः रक्षन्ति दैतेयाः दर्भा रक्षन्ति राक्षसाः ।
रक्षन्ति श्रोत्रियाः पङ्क्तिं स्नातके दत्तमक्षयम् ॥

उशना-

कुशा दर्भाः समाख्याताः कुतपो श्रोत्रियस्तथा ।
दुहितुश्चैव ये पुत्रा दौहित्रास्ते प्रकीर्त्तिताः ॥

पैठीनसिः-

कृतोऽपि श्राद्धवेलायां श्रोत्रियो यदि दृश्यते ।
श्राद्धं पुनाति वै यस्मात् कुतपस्तेन संज्ञितः ॥

विष्णुः-

यवैः तिलैः सर्षपैर्वा यातु धानान् विसर्जयेत् ।

## अथैकोद्दिष्टम्

शातातपः-

एकाद्दिष्टं तु यच्छ्राद्धं नैमित्तिकमिहोच्यते ।
तदप्यद्यैवं कर्त्तव्यमयुग्मानाशयेद्द्विजान् ॥

मत्स्यपुराणे-

तत एकादशाहे तु द्विजानेकादशैव तु ।
क्षत्रादिसूतकान्ते तु भोजयेदयुजो द्विजान् ॥
द्वितीयेऽहनि पुनस्तद्वदेकोद्दिष्टं समाचरेत् ।

याज्ञवल्क्यः-

एकोद्दिष्टं देवहीनमेकार्घ्यैकपवित्रकम् ।
आवाहनाग्नौकरणरहितं ह्यपसव्यवत् ॥
उपतिष्ठतामित्यक्षयस्थाने विप्रविसर्जने ।
अभिरम्यतामिति वदेद्ब्रूयुस्तेऽभिरताः स्म ह ॥

-याज्ञवल्क्यस्मृतिः १/२५१-२५२ ।

छन्दोगपरिशिष्टे कात्यायनः-

श्राद्धमग्निमतः कार्यं दाहादेकादशेऽहनि ।
ध्रुवाणि तु प्रकुर्वीत प्रमीताहनि सर्वदा ॥
द्वादशप्रतिमास्यानि आद्यं षाण्मासिकं तथा ।

सपिण्डीकरणं चेति प्रेतश्राद्धानि षोडश ॥
एकाहेन तु षण्मासा यदा स्युरपि वा त्रिभिः ।
न्यूनाः संवत्सराच्चैव स्यातां षाण्मासिके तथा ॥

देवलः-

एकादशादिभिः श्राद्धे मृतस्याप्यायनं चरेत् ।
सम्यक् संवत्सरे पूर्णे पितृणां स्थानमृच्छति ॥

हारीतः-

मृते पितरि वै पुत्रः पिण्डमब्दे समाचरेत् ।
अन्नं कुम्भं च विप्राय प्रेतनिर्देश धर्मतः ॥

याज्ञवल्क्यः-

अर्वाक् सपिण्डीकरणं यस्य संवत्सराद्भवेत् ।
तस्याप्यन्नं सोदकुम्भं दद्याद्वर्षं द्विजन्मने ॥

याज्ञवल्क्यस्मृतिः १/२५५ ।

## अथ सपिण्डीकरणम्

शातातपः-

संवत्सरे तु विज्ञेयं सपिण्डीकरणं त्विह ।
सपिण्डीकरणान्ता च ज्ञेया प्रेतक्रिया बुधैः ॥
सपिण्डीकरणं श्राद्धं दैवपूर्वं नियोजयेत् ।
पितृन्नेवाशचयेत्तत्र पुनः प्रेतं च निर्दिशेत् ॥
निरूप्य चतुरः पिण्डान् पिण्डदः प्रतिनामतः ।
ये समानामिति द्वाभ्यामाद्यां तु विभजेत् त्रिधा ॥
एक एव विधिः पूर्वमर्धपात्रचतुष्टये ।
आसिञ्चेत्पितृपात्राणि प्रेतपात्रेण मन्त्रवित् ॥

याज्ञवल्क्यः-

गन्धोदकतिलैर्युक्तं कुर्यात् पात्रचतुष्टयम् ।
अर्घ्यार्थं पितृपात्रे तु प्रेतपात्रं प्रसेचयेत् ॥

ये समाना इति द्वाभ्यां शेषं पूर्ववदाचरेत् ।
एतत् सपिण्डीकरणमेकोद्दिष्टं स्त्रिया अपि ॥

- याज्ञवल्क्यस्मृतिः १/२५३-२५४ ।

जाबालः-

नासपिण्डाग्निमान् पुत्रं पितृयज्ञं समाचरेत् ।
पापी भवत्यकुर्वन् हि पितृहा चोपजायते ॥

विष्णुः-

सपिण्डीकरणं स्त्रीणां कार्यमेव यथा भवेत् ।
यावज्जीवं तथा कुर्याच्छ्राद्धं तु प्रतिवत्सरम् ॥

वृद्धशातातपः-

मातुः सपिण्डीकरणं कथं कार्यं सुतैर्भवेत् ।
पितामह्या सहैवास्याः सपिण्डीकरणं स्मृतम् ॥

छन्दोगपरिशिष्टे कात्यायनः-

मातुः सपिण्डीकरणं पितामह्या सहोदितम् ।
यथोक्तेनैव कालेन पुत्रिकाया न चेत् सुतः ॥

तथा-

पितामहः पितुः पश्चात् पञ्चत्वं यदि गच्छति ।
पौत्रेणैकादशाहादिकर्त्तव्यं श्राद्धषोडषम् ॥
नैतत्पौत्रेण कर्त्तव्यं पुत्रवांश्चेत्पितामहः ।
पितुः सपिण्डनं कृत्वा कुर्यान्मासानुमासिकम् ॥
असंस्कृतौ न संस्कार्यौ पूर्वौ पौत्रप्रपौत्रकैः ।
पितरं तत्र संस्कुर्यादिति कात्यायनोऽब्रवीत् ॥

## अथ संस्कारः

मनुः-

वैदिकैः कर्मभिः पुण्यैः निषेकादिद्विजन्मनाम् ।
कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च ॥

-मनुस्मृतिः २/२६ ।

याज्ञवल्क्यः-

ब्रह्मक्षत्रियविट्शूद्रा वर्णास्त्वाद्यस्त्रयो द्विजाः ।
निषेकाद्याः श्मशानान्तास्तेषां वै मन्त्रतः क्रिया ॥

- याज्ञवल्क्यस्मृतिः १/१० ।

यमः- शूद्रोऽप्येवंविधः कार्यो विना मन्त्रेण संस्कृतः ।
न केनचित् समसृजत् छन्दसा तं प्रजापतिः ॥

ब्रह्मपुराणे-

विवाहमात्रं संस्कारं शूद्रोऽपि लभतां सदा ।

मनुः-

गर्भैर्होमैः जातकर्मचौडमौञ्जीनिबन्धनैः ।
बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते ॥
स्वाध्यायेन व्रतैर्होमैः त्रैविद्येनेज्यया सुतैः ।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ॥

-मनुस्मृतिः २/२७-२८ ।

## पुंसवनम्

प्रयोगपारिजाते जातुकर्ण्यः-

द्वितीये वा तृतीये वा मासि पुंसवनं भवेत् ।
व्यक्ते गर्भे भवेत्कार्यं सीमन्तेन सहाथवा ॥

बृहस्पतिः-

तृतीये मासि कर्त्तव्यं गृष्टैरन्यत्र शोभनम् ।
गृष्टैश्चतुर्थे मासे तु षष्ठे मास्यथवाष्टमे ॥

ब्राह्मे-

गर्भाधानादिसंस्कर्त्ता पतिः श्रेष्ठतमः स्मृतः ।
अभावे स्वकुलीनः स्याद् बान्धवोऽन्यत्र गोत्रजः ॥

मदनरत्ने सत्यव्रतः-

मृतो देशान्तरगतो भर्त्ता स्त्री यद्यसंस्कृता ।

देवरो वा गुरुर्वाऽपि वंश्यो वाऽपि समाचरेत् ॥

हेमाद्रौ यमः-

प्रथमे मासि द्वितीये वा यदा पुंनक्षत्रेण चन्द्रमा युक्तः स्यात् ।

नृसिंहः-

रिक्तां पर्व च नवमीं त्यक्त्वा पुंसवने शुभाः ।

## सीमन्तोन्नयनम्

हेमाद्रौ-

अथ सीमन्तोन्नयनं चतुर्थे पञ्चमे षष्ठे च इति ।

वसिष्ठः-

चतुर्थे सप्तमे मासि षष्ठे वाप्यथवाष्टमे ।

हेमाद्रौ शङ्खः-

गर्भस्पन्दने सीमन्तोन्नयनं, यावद्वा न प्रसवः ।

कार्ष्णाजिनिः-

गर्भलम्भनमारभ्य यावन्न प्रसवस्तथा ।
सीमन्तोन्नयनं कुर्याच्छङ्खस्य वचनं यथा ॥

वसिष्ठः-

चतुर्थे सावने मासि षष्ठे वाप्यथवाष्टमे ।

हारीतः-

सकृत् संस्कृतसंस्कारा सीमन्तेन द्विजस्त्रियः ।
यं यं गर्भ प्रसूयन्ते स सर्वः संस्कृतो भवेत् ॥

देवलः-

संकृच्च संस्कृता नारी सर्वगर्भेषु संस्कृता ।

## जातकर्मः

मनुः-

प्राङ्नाभिवर्धनात् पुंसो जातकर्म विधीयते ।

मन्त्रवत् प्राशनं चास्य हिरण्यमधुसर्पिषाम् ॥

-मनुस्मृतिः २/२९ ।

वसिष्ठः-

श्रुत्वा जातं पिता पुत्रं सचैलं स्नानमाचरेत् ।

हेमाद्रौ वैजवापः-

जन्मनोऽनन्तरं कार्यं जातकर्म यथाविधि ।
दैवादतीतकालं चेदतीते सूतको भवेत् ॥

तथा-

जातमात्रकुमारस्य जातकर्म विधीयते ।
स्तनप्राशनतः पूर्वं नाभिकर्त्तनतोऽपि वा ॥

ब्रह्मपुराणे-

देवाश्च पितरश्चैव पुत्रे जाते द्विजन्मनाम् ।
आयान्ति तस्मात्तदहः पुण्यं पूज्यं च सर्वदा ॥
तत्र दद्यात् सुवर्णं च भूमिं गां तुरगं तथा ।
छात्रं छागं च माल्यं च शयनं चासनं गृहम् ॥
जाते श्राद्धे न दद्याच्च पक्वान्नं ब्राह्मणेष्वपि ।

## नामकरणम्

मनुः-

नामधेयं दशम्यां तु द्वादश्यां वाऽस्य कारयेत् ।
पुण्ये तिथौ मुहूर्त्ते वा नक्षत्रे वा गुणान्विते ॥

-मनुस्मृतिः २/३० ।

भविष्यपुराणे-

नामधेयं दशम्यां तु केचिदीच्छन्ति पार्थिव ।
द्वादश्यामथवा रात्रौ मासे पूर्णे तथाऽपरे ॥
अष्टादशेऽहनि तथा वदन्त्यन्ये मनीषिणः ।
पुण्ये तिथौ मुहूर्त्ते वा नक्षत्रे वा गुणान्विते ॥

मदनरत्ने बृहस्पतिः-

द्वादशे दशमे वाऽपि जन्मतोऽपि त्रयोदशे ।
विंशतौ चैव द्वात्रिंशे वर्णानान्तु यथाक्रमम् ॥

हेमाद्रौ भविष्ये-

नामधेयं दशम्यां तु द्वादश्यां मासि केचन ।
अष्टादशेऽहनि तथा वदन्त्यन्ये मनीषिणः ॥

मदनरत्ने नारदीये-

सूतकान्ते नामकर्म विधेयं स्वकुलोचितम् ।
नामपूर्वं तु मासस्य मङ्गलं सुसमाक्षरैः ॥

मनुः-

मङ्गल्यं ब्राह्मणस्य स्यात् क्षत्रियस्य बलान्वितम् ।
वैश्यस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितम् ॥
शर्मवद् ब्राह्मणस्य स्याद्राज्ञः रक्षासमन्वितम् ।
वैश्यस्य पुष्टिसंयुक्तं शूद्रस्य प्रेष्यसंयुक्तम् ॥
स्त्रीणां सुखोद्यमक्रूरं विस्पष्टार्थं मनोहरम् ।
माङ्गल्यं दीर्घवर्णान्तमाशीर्वादाभिधानवत् ॥

-मनुस्मृतिः २/३१-३३ ।

यमः-

शर्म देवश्च विप्रश्च वर्म राजा च भूभुजः ।
गुप्तो दत्तश्च वैश्यस्य दासः शूद्रस्य कारयेत् ॥

विष्णुपुराणे-

गुप्तदासात्मकं नाम प्रशस्तं वैश्यशूद्रयोः ।
नार्थहीनं न चाशस्तं नापशब्दयुतं तथा ॥
नामङ्गल्यं जुगुप्स्यं वा नाम कुर्यात् समाक्षरम् ।
नातिदीर्घं नातिह्रस्वं नातिगुर्वक्षरान्वितम् ॥

गार्ग्यः-

मास नाम गुरोर्नाम दद्याद्बालस्य वै पिता ।

## निष्क्रमणम्

भविष्यपुराणे-

द्वादशेऽह्नि राजेन्द्र शिशोः निष्क्रमणं गृहात् ।
चतुर्थे मासि कर्त्तव्यं तथान्येषां मतं विभो ॥

यमः-

ततस्तृतीये कर्त्तव्यं मासि सूर्यस्य दर्शनम् ।
चतुर्थे मासि कर्त्तव्यं शिशोश्चन्द्रस्य दर्शनम् ॥

ज्योतिर्निबन्धे-

तृतीये वा चतुर्थे वा मासि निष्क्रमणं भवेत् ।

मदनरत्ने-

अन्नप्राशनकाले वा कुर्यान्निष्क्रमणक्रियाम् ।

छन्दोगपरिशिष्टे-

सूर्येन्दोः कर्मणी ये च तयोः श्राद्धं न विद्यते ।

विष्णुधर्मे-

दिगीशानां दिने तत्र तथा चन्द्रार्कयोर्द्विजः ।
पूजनं वासुदेवस्य गगनस्य च कारयेत् ॥

## अन्नप्राशनम्

मनुः-

चतुर्थे मासि कर्त्तव्यं शिशोनिष्क्रमणं गृहात् ।
षष्ठेऽन्नप्राशनं मासि यदेष्टं मङ्गलं कुले ॥

-मनुस्मृतिः २/३४ ।

यमः-

ततोऽन्नप्राशनं मासि षष्ठे कार्यं यथाविधि ।
अष्टमे मासि कर्त्तव्यं यद्वेष्टं मङ्गलं कुले ॥

पारिजाते नारदः-

जन्मतो मासि षष्ठे स्यात्सौरेणान्नप्राशनं परम् ।

सम्बत्सरे वा सम्पूर्णे केदिदिच्छन्ति पण्डिताः ॥

मदनरत्ने लौगाक्षिः-

षष्ठेऽन्नप्राशनं जातेषु दन्तेषु वा इति ।

शङ्खः-

संवत्सरेऽन्नप्राशनमर्द्धसंवत्सरे वा ॥ इति ।

ज्योतिर्निबन्धे नारदः-

षष्ठे वाप्यष्टमे मासि पुंसां, स्त्रीणां तु पञ्चमे ।
सप्तमे मासि वा कार्यं नवान्नप्राशनं शुभम् ॥

## चूड़ाकरणम्

मनुः-

चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः ।
प्रथमेऽब्दे तृतीये वा कर्त्तव्यं श्रुतिचोदनात् ॥

-मनुस्मृतिः २/३५ ।

यमः-

ततः संवत्सरे पूर्णे चूडाकर्म विधीयते ।
द्वितीये वा तृतीये वा कर्त्तव्यं श्रुतिचोदनात् ॥

शङ्खलिखितौ-

तृतीये वर्षे चूडाकरणं पञ्चमे वा ।

बृहस्पतिः-

तृतीयेऽब्दे शिशोर्गर्भाज्जन्मतो वा समम् ।
पञ्चमे सप्तमे वाऽपि स्त्रियः पुंसोऽपि वा समम् ॥

नारदः-

जन्मतस्तु तृतीयेऽब्दे श्रेष्ठमिच्छन्ति पण्डिताः ।
पञ्चमे सप्तमे वाऽपि जन्मतो मध्यमं भवेत् ॥
अधमं गर्भतः स्यात्तु नवमैकादशेऽपि वा ।

# अथोपनयनम्

मनुः-

गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम् ।
गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः ॥
ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे ।
राज्ञो वलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे ॥

-मनुस्मृतिः २/३६-३७ ।

याज्ञवल्क्यः-

गर्भाष्टमेऽष्टमे वाऽब्दे ब्राह्मणस्योपनायनम् ।
राज्ञमेकादशे सैके विशामेके यथाकुलम् ॥

-याज्ञवल्क्यस्मृतिः १/१४ ।

आश्वलायनः-

गर्भाष्टमेऽष्टमे वाऽब्दे पञ्चमे सप्तमेऽपि वा ।
द्विजत्वं प्राप्नुयाद्विप्रो वर्षे त्वेकादशे नृपः ॥

लौगाक्षिः-

सप्तमे वर्षे ब्राह्मणस्योपनयनम् ।
नवमे राजन्यस्यैकादशे वैश्यस्य ॥

मनुः- आ षोडशाद् ब्राह्मणस्य सावित्री नातिवर्त्तते ।
आ द्वाविंशात्क्षत्रबन्धोराचतुर्विंशतेर्विशः ॥
अत ऊर्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः ।
सावित्री पतिता व्रात्या भवन्त्यार्यविगर्हिताः ॥
नैतैरपूतैः विधिवदापद्यपि हि कर्हिचित् ।
ब्राह्मान् यौनांश्च सम्बन्धानाचरेद् ब्राह्मणः सह ॥

-मनुस्मृतिः २/३८-४० ।

याज्ञवल्क्यः-

आषोडशादाद्वाविंशाच्चतुर्विंशाच्च वत्सरात् ।
ब्रह्मक्षत्रविशां काल औपनायनिकः परः ॥

**अत ऊर्ध्वं पतन्त्येते सर्वधर्मबहिष्कृताः ।**
**सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः ॥**

-याज्ञवल्क्यस्मृतिः १/३७-३८ ।

ज्योतिर्निबन्धे-

**अग्रजा बाहुजा वैश्याः स्वावधेरुर्ध्वमब्दतः ।**
**अकृतोपनयाः सर्वे वृषला एव ते स्मृताः ॥**

गर्गः-

**विप्रं वसन्ते क्षितिपं निदाघे वैश्यं घनान्ते व्रतिनं विदध्यात् ।**
**माघादिशुक्रान्तिकपञ्चमासाः साधारणा वा सकलद्विजानाम्॥**

## विवाहः

याज्ञवल्क्यः-

**अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् ।**
**अनन्यपूर्विकां कान्तामसपिण्डां[२५] यवीयसीम् ॥**

---

२५. असपिण्डां नाम समान एकः पिण्डो देहो यस्याः सा सपिण्डाः। न सपिण्डा असपिण्डा ताम् । सपिण्डता च एकशरीरावयवान्वयेन भवति । तथा हि पुत्रस्य पितृशरीरावयवान्वयेन पित्रा सहैकपिण्डता । एवं पितामहादिभिरपि पितृद्वारेण तच्छरीरावयवान्वयात् । एवं मातृशरीरावयवान्वयेन मात्रा सह। तथा मातामहादिभिरपि मातृद्वारेण । तथा मातृष्वसृमातुलादिभिरप्येक-शरीरावयवान्वयात् । तथा पितृव्य पितृष्वस्रादिभिरपि । तथा पत्न्या सह पत्न्या एकशरीरारम्भकतया । एवं भ्रातृभार्याणामपि परस्परमेकशरीरारब्धे सहैकशरीरारम्भकत्वेन । एवं यत्र 'सपिण्ड'शब्दस्तत्र तत्र साक्षात् परम्परया वा एकशरीरावयवान्वयो वेदितव्यः । यद्येवं मातामहादीनामपि दशाहं शावमाशौचं सपिण्डेषु विधीयते । इत्यविशेषेण प्राप्नोति । स्यादेतत्- यदि तत्र प्रत्तानामितरे कुर्युः इत्यादिविशेषवचनं न स्यात् । अतश्च सपिण्डेषु यत्र विशेषवचनं नास्ति तत्र दशाहं शावमाशौचम् इत्येतद्वचनमवतिष्ठतं । अवश्यं चैकशरीरावयवान्वयेन सापिण्ड्यं वर्णनीयम् ।

अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम् ।
पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा ।।
दशपुरुषविख्याताच्छ्रोत्रियाणां महाकुलात् ।
-याज्ञवल्क्यस्मृतिः १/५२-५३ ।

मनुः-

गुरुणामनुमतः स्नात्वा समावृत्तो यथाविधि ।
उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम् ।।
असपिण्डा च या मातुरसगोत्रा च या पितुः ।
सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ।।
महान्त्यपि समृद्धानि गोजाविधनधान्यतः ।
स्त्रीसंबन्धे दशैतानि कुलानि परिवर्जयेत् ।।
हीनक्रियं निष्पुरुषं निच्छन्दो रोमशार्शसम् ।
क्षय्यामयाव्यपस्मारिश्वित्रि कुष्ठिकुलानि च ।।
नोद्वहेत् कपिलां कन्यां नाधिकाङ्गीं न रोगिणीम् ।
नालोमिकां नातिलोमां न वाचाष्टां न पिङ्गलाम् ।।
नर्क्षवृक्षनदीनाम्नीं नान्त्यपर्वतनामिकाम् ।
न पक्ष्यहिप्रेष्यनाम्नीं न च भीषणनामिकाम् ।।
अव्याङ्गाङ्गीं सौम्यनाम्नीं हंसवारणगामिनीम् ।
तनुलोमकेशदशनां मृद्वङ्गीमुद्वहेत् स्त्रियम् ।।
यस्यास्तु न भवेद्भ्राता न विज्ञायते वा पिता ।
नोपयच्छेत तां प्राज्ञः पुत्रिकाधर्मशङ्कया ।।
न ब्राह्मणक्षत्रिययोरापद्यपि हि तिष्ठतोः ।
कस्मिंश्चिदपि वृत्तान्ते शूद्राभार्योपदिश्यते ।।
हीनजातिस्त्रियं मोहादुद्वहन्तो द्विजातयः ।
कुलान्येव नयन्त्याशु ससन्तानानि शूद्रताम् ।।
शूद्रावेदी पतन्यत्रेरुतथ्यतनयस्य च ।

शौनकस्य सुतोत्पत्या तदपत्यतया भृगोः ॥

-मनुस्मृतिः ३/४-१६ ।

## विवाहभेदाः

यथाह मनुः-

ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः ।
गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः ॥

-मनुस्मृतिः ३/२१ ।

कन्यादानक्रममाह याज्ञवल्क्यः-

पितापितामहो भ्राता सकुल्यो जननी तथा ।
कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः ॥

-याज्ञवल्क्यस्मृतिः १/१६३-६४ ।

इति श्रीगोपालन्यायपञ्चाननभट्टाचार्यविरचित आचारनिर्णयः ।
समाप्तोऽयं ग्रन्थः ॥

***

## सहायकग्रन्थसूची


| | | |
|---|---|---|
| अमरकोषः | रामाश्रमी, चौखम्बा | १९६८ |
| अङ्गीरस्मृतिः | माद्रास | १९५३ |
| अर्थसंग्रहः | चौखम्बा | १९७७ |
| आचारेन्दुः | हरिनारायणआपटे, आनन्दाश्रममुद्रणालयः | १८३० |
| आचारादर्शः | खेमराजश्रीकृष्णदास श्रीवेङ्कटेश्वरयन्त्रागारः, मुम्बई | १९६१ |
| आचारभूषणम् | हरिनारायणआपटे, आनन्दाश्रममुद्रणालयः | १८३० |
| आचारमयूखः | नीलकण्ठभट्टः, गुजुरातीमुद्रणालय | १९१५ |
| आपस्तम्बधर्मसूत्रम् | उज्ज्वला, चौखम्बा | १९६९ |
| आपस्तम्बश्रौतसूत्रम् | गायकवाड | १९६३ |
| आश्वलायनगृह्यसूत्रम् | नारायणभाष्यसहितम् विजयनगरम्, दिल्ली | १९६७ |
| ऋग्वेदसंहिता | अजमेरीयवैदिकयन्त्रालयः अजमेर | |
| ऋग्वेदभाष्यभूमिका | सायणाचार्यः, चौखम्बा | १९७३ |
| ऐतरेयब्राह्मणम् | आनन्दाश्रममुद्रणालय, पुण्यपत्तनम् | १८९६ |
| कृत्यकल्पतरुः(ब्रह्मचारीकाण्डं) | लक्ष्मीधरः, वरोदा | १९५० |
| कृत्यकल्पकरुः(श्राद्धकाण्डं) | लक्ष्मीधरः, वरोदा | १९५० |
| कौटिल्यार्थशास्त्रम् | आर.पी.कङ्गले, मुम्बई | १९६६ |
| गदाधरपद्धतिः | महेश्वरकरशर्मा, राधारमणपुस्तकालय, कटक | |
| गौतमधर्मसूत्रम् | मस्करी, महीशूर | १९१७ |
| गोभिलगृह्यसूत्रम् | नारायणीसहितम् | |
| चतुर्वर्गचिन्तामणिः | विश्वनाथशास्त्री, दिल्ली | १९५४ |
| छान्दोग्योपनिषद् | वेदान्तदीपिका, निर्णयसागरमुद्रणालय, मुम्बई | १९५० |
| तर्कसंग्रहः | हरिकृष्णनिबन्धभवनम् | १९६० |
| तैतिरीयोपनिषत् | आनन्दाश्रम | १९११ |
| ताण्ड्यब्राह्मणम् | कलिकत्तापत्तनम् | १८७० |

धर्मशास्त्रशब्दकोशः — कुलमणिमिश्रशर्मा, ओडिशाराज्य-पर्यटनक्रीडासंस्कृतिनिर्देशालय, भवनेश्वर१९८१
धर्मसिन्धुः — श्रीकाशीनाथउपाध्यायः चौखम्बा, बारणासी १९६८
नित्याचारप्रदीपः — नरसिंहवाजपेयी, एसियाटिक्सोसाइटी १९२६
नित्याचारपद्धतिः — विद्याकरवाजपेयी, एसियाटिक्सोसाइटी१९०३
निर्णयसिन्धुः — कमलाकरभट्टः, निर्णयसागर-मुद्रणालय, मुम्बई १९०६
पद्मपुराणम् — कलिकत्तापत्तनम् १९७५
पराशरस्मृतिः — माध्वाचार्यः, एसियाटिक्सोसाइटी कलिकत्ता १९७४
पण्डितसर्वस्वम् — कटकम् १८७६
परिभाषाप्रकाशः — वीरमित्रोदयः, मित्रमिश्रः, चौखम्बा
पारस्करगृह्यसूत्रम् — कुलमणिमिश्रः, श्रीसदाशिवकेन्द्रीय संस्कृतविद्यापीठम्, पुरी १९७९
भगवद्गीता (सप्तभाष्योपेता) — मुशीराममनोहरलाल १९७६
मनुस्मृतिः — कुल्लुकः, चौखम्बा, १९७०
मीमांसापरिभाषा — कृष्णयज्वा, मेरठ
महाभारतम् (अनुशासनपर्व) — भण्डारकरप्राच्यविद्याप्रकाशन १९७५
महापातकविमर्शः — डॉ० अतुलकुमारनन्दः १९९२ बाराणसीसंस्कृतविद्याभवनम्
याज्ञवल्क्यस्मृतिः (मिताक्षरा) — निर्णयसागरमुद्रणालय
रघुवंशम् (कालिदासः) — चौखम्बा १९६१
वसिष्ठधर्मसूत्रम् — भण्डारकरप्राच्यविद्यासंशोधनागारम् पुण्यपत्तनम् १९३०
विष्णुधर्मसूत्रम् — केशववैजयन्तीसहितम्, मद्रास १९६२
शब्दकल्पद्रुमः — पुष्पेन्द्रकुमारशर्मा, दिल्ली १९३०
श्राद्धदीपः — दिव्यसिंहमहापात्र एसियाटिक्सोसाइटी, कलिकत्ता १९७७

| | | |
|---|---|---|
| श्राद्धप्रदीपः | श्रीब्रजकिशोरस्वाइँ संस्कृतपुस्तकभण्डार, कलिकता | |
| श्राद्धचन्द्रिका | चौखम्बा | १९३४ |
| श्राद्धप्रकाशः | वीरमित्रोदयः, चौखम्बा | |
| श्राद्धविवेकः | शूलपाणिः, कलिकत्तापत्तनम् | |
| श्राद्धमयूखः | नीलकण्ठभट्टः, मुम्बई | १९२० |
| श्रीमद्भगवद्गीता | गीताप्रेस्, गोरखपुर | |
| शुक्लयजुर्वेदः | मोतीलालवनारसीदास | १९७१ |
| सरस्वतीविलासः | गजपतिप्रतापरुद्रदेव, महीशूर | १९१८ |
| संस्कारप्रकाशः | वीरमित्रोदयः, चौखम्बा | |
| स्मृतिचन्द्रिका | देवणभट्टः, महीशूर | १९१८ |

हिन्दीग्रन्थाः

| | | |
|---|---|---|
| स्मृतिसारसंग्रहः | डॉ० अतुलकुमारनन्दः पुरी | २००१ |
| धर्मद्रुमः | आचार्य राजन्द्रप्रसादपाण्डेय किशोरविद्यानिकेतन, वारणासी | १९८० |
| धर्मशास्त्र का इतिहास | डॉ० पी.भि.काणे, हिन्दीसंस्थान उत्तरप्रदेश | १९८१ |

ओडिआग्रन्थाः

| | | |
|---|---|---|
| ओडिशार संस्कृत लेखा ओ लेखक | नीलमणिमिश्र, आडिशा साहित्य अकादमी, भुवनेश्वर | १९७८ |
| पुरोहितकर्मकण्डः | दयानिधिखडिरत्न, धर्मग्रन्थष्टोर, कटक | |
| पुरोहितसर्वस्व | बालकृष्णकर, सारस्वतप्रेस, कटक | १९३८ |

आंग्लोग्रन्थाः

| | | |
|---|---|---|
| एथिक्स ऑफ् इण्डिया | एस्.के मित्र, कलिकत्ता | १९५६ |
| डेस्क्रिप्टिव् काटलग् ऑफ् ओडिशा (खण्ड-१) | केदारनाथमहापात्र आडिशा राज्यसंग्राहालय, भुवनेश्वर | १९५८ |
| हिष्टोरिकाल् रिसर्च जर्नल् ऑफ् ओडिशा | ओडिशा राज्य संग्रहालय, भुवनेश्वर, आडिशा | |


***

